कस्त्वं कीटकादप्यधमः? पलायस्व शीघ्रमितो यदि जीवितुमिच्छसि । यदि मत्तः प्रत्युत्तरं काङ्क्षसे तर्हि दास्याम्येतयाऽसिधेनुकया ।"

वीरसिंहो नितान्तं दुरभिमानी योधः । न प्रभवेत्कस्याश्चिद्योषितो भीतः पलायितुम् । काम एव तस्य सखा भीतः पलायितः । अन्यस्तु क्रोधः परिचयं सुमहान्तं स्मरन्काले तं नाहासीत् अथ सोऽप्युद्यतवान् कालजिह्वाकरालं करवालम् । अन्ततस्तस्य दुर्नीतिरेवं फलिता । अणीयांसमपि लाभं विना प्रियशीला कुलकन्या हन्तव्या । अथवा भोगायतनं सुखसंवर्धितमात्मनः शरीरं तस्याः शस्त्रीज्वालायां होतव्यम् ।

सम्प्रति नैकमपि क्षणं व्यर्थमकार्षीत्पूर्णा । सिंहिकेवाशु तस्मिन्पतिता तस्य सायुधे बाहौ गाढमखनीदसिधेनुकाम् । तेनैव वेगेन तमपीपतदधः। स प्रागेव पतितः सम्प्रति पुनः पतितः । तदा तस्य न केवलमन्तराशाः बहिराशाश्च प्रणष्टाः । तदानीं तस्य मनो मूर्धानं विसृज्य क्वापि गतम् । सायुधोऽप्यमनस्कः किंकरोतु बाहुः अदृष्टवशात्तं नाहासिषुः प्राणाः । पूर्णायाश्च नास्ति तत्प्राणापहरणेच्छा । यदि सा तस्य प्राणानपहर्तुमैषिष्यत् तर्हि तं हृदि प्राहरिष्यत् ।

एवमपि पतितं विसंज्ञं तमालोक्य संशयोऽभूत् पूर्णायाः । अथ तामाविक्षन्महती करुणा । ततः सा पर्यैक्षिष्ट तं प्राणोऽस्ति वा न वेति । अस्ति श्वासः । तेन पूर्णा जयादप्यधिकमानन्दमगात् । शनैस्तस्य बाहोः शस्त्रीमुदहार्षीत् । अथ व्यलोकिष्टेतस्ततः । अबोधि नेपालगुल्मसंहतिं समीपे वर्तमानम् । उन्मूलितानीतानां तेषां वनस्पतीनां क्षीरेण प्रसरद्रक्तं तस्य प्रहारस्थलमपूपुरत् । अनन्तरं तस्यैवोत्तरीयेण तद्बद्ध्वा तस्य संज्ञां प्रतीक्षमाणा दैवमिष्टं हृद्यैराशुरचितैः पद्यैरवितथार्थै

र्मन्दस्वरमस्तौषीत् -

(तनुमध्यावृत्तम्)

१. जीवेन सहास्य स्थित्यै क्षितिपृष्ठैः ।
नाकक्षितिनाथं श्लोकैरुपतिष्ठे ।।

२. प्राणो भुवनानां देवन्द्र यदि त्वम् ।
कः स्वल्पवचास्ते प्रस्तौतु विभुत्वम् ।।

३. आदिर्भुवनानां प्राणस्त्वमपापः ।
किञ्चेन्द्रविकासे बोधामलरूपः ।।

४. स्थानं महदिन्द्र प्राणस्य तवाभ्रम् ।
बोधस्य तु बिम्बं सौरं परिशुभ्रम् ।

५. प्राणस्य वलारे बोधस्य च दाता ।
सर्वस्य च जन्तोर्देवासि विनेता ।।

६. हीनं भवता चेत्कायं कमनीयम् ।
स्याद्वासवसद्यो दूरेत्यजनीयम् ।।

७. प्राणन्पवमानो घोषन्नसि रुद्रः ।
इन्द्रः कथितस्त्वं दीप्यन् दिवि भद्रः ।।

८. वन्दे पवमानं रुद्रं मघवन्तम् ।
नाथं भुवनानामादिं भगवन्तम् ।।

क्षणात्पूर्वं प्राणानेवापहर्तुमुद्यतो बाह्यानिलो बद्धे प्रहारस्थले चामरग्राहीव तं परिचरंत्संज्ञाप्रदोऽभूत् । कतिपयक्षणेभ्यः पूर्वं राक्षसीव प्रहृतवती प्रमदा सम्प्रति प्राप्तकालमुपक्रमं कृत्वा तस्य जीविताय दैवं प्रार्थयन्ती । प्रिया भगिनीव पार्श्वे समुपविष्टा ।

प्राप्तसंज्ञो वीरसिंह उन्मीलितवान्नेत्रे । अज्ञासीद्बाह्ये प्रदेशे पतितमात्मानम् । अस्मार्षीत् सर्वं वृत्तम् । अलज्जिष्ट बलवत् । अलोकिष्ट गगनम् । तत्र तेन विलोकितश्चन्द्रिकाच्छलेन हसन्नात्मपराभवसाक्षी विशदरुचि-रर्धाधिकश्चन्द्रमाः । अनन्तरमितस्ततो नेत्रे प्रसारितवान् । पार्श्वे व्यलोकिष्ट प्रमदावदनकैतवं पूर्णं चन्द्रम् । अथ "हा राक्षसी" इत्याक्रुष्टवान् ।

पूर्णा – "राक्षसस्य गर्वभङ्गादनन्तरं राक्षसी गता । एषा ते जीवितं कांक्षन्ती भगिनी । भ्रातः ! विस्मरेमां चर्याम् । जीव चिरं बुद्धिमान्भूत्वा ।"

एतावदभिधाय सा मधुरवाणी तस्मात्प्रदेशादाशु चलिता । सम्प्रत्येवाबोधि वीरसिंह आत्मानमुपकृतं तया । अज्ञासीच्च कश्चिदोषधिविशेषं रक्तप्रसारपरिहाराय बाहौ बद्धम् । पराजयादपि स शत्रुकृत उपकार एवास्य महदवमानमिव प्रत्यभासीत् ।

अष्टमं प्रकरणम्

## सुमित्रभवशर्मसंवादः

अन्यद्रह्मस्थलं गच्छामः। तस्मिन्नेव निशामुखे गिरिव्रजवासी भारद्वाजो भवशर्मा देववाटिकाग्रहारतस्तस्य गृहमागतो गौतमः सुमित्रश्चबहून्विषयानधिकृत्य समभाषिषाताम् । अत्र सम्भाषणे तयोरल्पमेव भवतु प्रयोजनम् । तथापि तच्छ्रवणे कथायाः पाठकानां बहु स्यात्प्रयोजनम् ।

भवशर्मा गौरस्तनुसुकुमारगात्रः। सुमित्रः श्यामो दृढस्थूलकायः । उभावपि सवयस्कौ पूर्णार्धशतवर्षौ । गृहपतेरतिथिः पितृष्वस्रीयः ।

आस्तीर्णकटा परितः शुद्धा गुग्गुलुधूपवासिता सा कुटी । तत्र ज्वलति सम्यक्संयुक्तद्विदशावलम्बी प्रदीपः । आरब्धं तयोर्विस्रब्धं सम्भाषणम् ।

सुमित्रः - "भव ! सत्यं त्वमतीव बुद्धिमान् । तथापि तव किमप्यालस्यं न नन्दयति ते मित्राणि ।"

भवशर्म - (ससम्भ्रमम्) "किं तत्" ?

सुमित्रः - "यद्धर्ममर्मविद्ब्राह्मणो भूत्वा प्रौढां कन्यामनुरूपाय वराया-प्रयच्छन्नुपेक्षसे । तत्रान्विष्यन्नपि न लभे हेतुम् । किं न जानासि ?

कन्याया ऋतवो यावन्तो व्यर्थास्तावत्यो भ्रूणहत्याः पित्रोरिति धर्मशासनम् ।''

भवशर्म – ''सत्यमस्ति तादृशो दोषः पित्रोः । यदि मिलितेऽपि कन्यायाः सम्मतेऽनुरूपे वरे तौ न दद्याताम् ।''

सुमित्रः – ''आश्चर्यमिव प्रतिभाति मे । किमेतावन्तं कालं त्वय्यन्विष्यत्यपि कन्यासम्मतोऽनुरूपो वरो न मिलितः । यदि ते वरान्वेषणमीदृश्या शीघ्रगत्या चलेत्तर्हि कन्यया किमपि रसायनं सेवितव्यं स्यात् न यथा काले वार्धकं स्पृशेत् ।''

भवशर्म – ''विश्वसिहि त्वम् । अत्र न मम प्रयत्नः किंचिदपि न्यूनः । किंकरोम्यहम् ? वत्साया अनुकूलः कालो नागतः ।''

सुमित्रः – ''अत्र ग्रामवासिनां दृष्टिरन्यादृशी । अन्यादृशी नगरवासिनाम् । यथोचितविद्याधनः कुलपुत्रोऽनुरूपो वरो ग्रामवासिनां दृष्टौ । नगरवासिनां तु बृहस्पतिरपि किंचिदेव विद्वान् कुषेरोऽपि नातीव धनवान् । मदनोऽपीषदेव सुन्दरः । पश्यामि नगरे समन्ततो बडबा इव प्रौढाः कन्याः । न काचिदष्टादशाद्वर्षादर्वाक्परिणीता दृश्यते । पादशतवर्षाश्च विद्यन्ते काश्चिदिति चित्रम् ।

भवशर्म – ''अन्योऽस्ति तत्र हेतुः । परमाचार्यश्रीनाथभट्टपादानामनुज्ञया राजधान्यां तत्रभवान् राणायनो यत्कन्याभ्यो विद्योपदेशं कर्तुम् आरब्धवान् । तस्यायं दोषो गुणो वा यदत्राति प्रौढकन्याबाहुल्यम् ।''

सुमित्रः - "श्लाध्यमेव तत्र भवतो राणायनस्य स्त्रीजनेषु कारुण्यम् । यथा पुंसां तथा स्त्रीणामपि विद्याप्रयोजनवतीत्यत्र न कश्चिद्विवादः । एतावन्मयोच्यते । कन्यानां गुरुकुलाद्विद्याग्रहणाय केनचिदवधिना भवितव्यम् । यथा धर्मस्य न लोपः स्यात् ।"

भवशर्म - "यदि नावधिस्तर्हि कथं धर्मस्य लोपः ?"

सुमित्रः - "यदि नावधिस्तर्हि पूर्वे चत्वारो धर्मविवाहा उच्छिद्येरन् । वर्षत्रयादनन्तरमृतुमत्याहि लभ्यते पितृनिरपेक्षः स्वयंवरणाधिकारः ।"

भवशर्म - "लभ्यतां नाम । तथापि पितुःप्रदानाधिकारो न नश्येद्यदि कन्या विधेया ।"

सुमित्रः - "तदेव विधेयत्वं बहुषु स्थलेषु दुर्लभम् भव ! किं मन्यसे सर्वाः कन्या अस्माकं चन्द्रप्रभया सदृश्यो विनीता इति । शृण्वद्यैव देववाटिकायां यद्वृत्तम् । यः काश्यपो विशालाक्ष आवयोः सतीर्थ्यो वर्तते तस्य ग्रामे । तस्य कन्या पूर्णा नाम्नी पितुरेवाधीतबहुलविद्या कवीश्वरी नितान्तं प्रज्ञावत्यद्यैव मध्याह्ने वितरं विसृज्यान्यत्रैव नगरे स्थितं पितृष्वसुर्गृहं प्रति किलायाता । पितुरपराधस्तु तेनानुरूपो वरः प्रदर्शितः । यदि तादृश्येव तादृशं पितरं तिरस्कृतवती तर्हि का गतिरन्येषां प्रौढकन्यापितृणाम् ?"

भवशर्म - "कः स वरः ? यो विशालाक्षेण दुहित्रे प्रदर्शितः ।"

सुमित्रः - "न दरिद्रः । पञ्चविंशतिसहस्रसुवर्णवार्षिकादायस्य महतः

संस्थानस्य पतिः । नारूपवान् । अपरो नलकूबरः सौन्दर्ये । नाविद्वान् । सुशिक्षितः शास्त्रेषु शस्त्रेषु च । न गतवयाः । पञ्चविंशतिवर्षवयस्को युवा । नानभिजातः । इतः कीर्तिशेषस्य सामन्तयज्ञमित्रस्य पुत्रः । ततो महामात्यशिवनाथस्य दौहित्रः। न ऋणी । लक्षाधिकसुवर्णमित-चरसम्पत्तिः ।''

भवशर्म - ''किं सामन्तवीरमित्रः ?''

सुमित्रः - ''अथ किम् ।''

भवशर्म - ''स किम्मयाचत पूर्णाम् ?''

सुमित्रः - ''न । यदि दुहिताङ्गीकुर्यात्तर्हि सङ्घटयितुं शक्यमिति विशालाक्षस्य दृष्टिः ।''

भवशर्म - ''मन्ये सा पितृष्वसुः पुत्रे रणन्धरेऽनुरक्ता । अनुरूप एव सः । तमहं जानामि सम्यक् । मम सूनोर्विष्णुशर्मण स प्रियः सखा । असाधारणो युवा विद्यारूपविक्रमेषु । पदं न्यस्तवानभिवृद्धिदशायाम् । उज्ज्वलं दृश्यते तस्य वाणिज्यम् ।''

सुमित्रः - ''भाव ! क्वाल्पवणिग्वृत्तिर्विप्रयुवकः ? क्व महासंसथानपतिर्वीरमित्रः? वीरमित्रस्य संस्थानवार्षिकादायेन तुल्यं स्याद्रणन्धरस्य सर्वस्वम् ।''

भवशर्म - ''न सम्पदमपेक्षन्ते कन्यानामनुरागाः ।''

सुमित्रः – "तिष्ठतु सम्पदस्तारतम्यम् । अथ केनाधिको वीरमित्राद्रणन्धरः ? द्वयोः पश्याम्यधिकम् । तस्मादप्ययं स्थूलः प्रांशुश्च ।"

भवशर्म – "सुमित्रः ! तव दृष्टिरेव निपुणा न बुद्धिः । किञ्चिद्विचारय पक्षपातं हित्वा । ज्ञास्यसि विद्यारूपविक्रमेषु रणन्धरवीरमित्रयो-स्तारतम्यम् । अथवालमावयोरनया निरर्थया चर्चया। प्रियमित्रैः सह वृथा वाग्वादो न कर्तव्य इति नीतिविदां दर्शनम् । यदाहुः –

"वाग्वादमर्थसम्बन्धं परोक्षे दारभाषणम् ।
यत्र मित्रत्वमिच्छन्ति तत्र त्रीणि न चालयेत् ।"

सुमित्रः – "विना वाग्वादं सारो न निर्गच्छेत् । यदि परोक्षे दारभाषणं न कर्तव्यं प्रोषितभर्तृका मित्रभार्या सर्वास्वापत्सु समुपेक्षितव्या स्यात् । अस्माद्द्वितयादप्यर्थसम्बन्धो मुख्यः । आपदि ऋणप्रदानेन यः करोति न साहाय्यकं स कथं मित्रं स्यात् ? किं मैत्र्याः शुष्कप्रियाण्येव लक्षणम् ?"

भवशर्म – "वाग्वादेषु निर्गतव्यः सारो रोषः । परोक्षे दारभाषणं च परेभ्यः शङ्काजनकं विविक्तसम्भाषणमत्रोद्दिष्टम् । मन्यते भवानृणप्रदानं साहाय्यकमिति । रोगप्रदानं चेत्साहाय्यकमृणप्रदानं साहाय्यकम् अभविष्यत् ।"

सुमित्रः – मरणतुल्यं मानभङ्गं तरितुमेव ऋणं याचेत मित्रम् । मरणाद्रोगो न किं वरम् ? भाव ! मित्रे विपदि मज्जति किमृणप्रदानेन मैत्री नश्येदिति भवादृशो नीतिविदुपेक्षितुं प्रभवेत् ?"

भवशर्म – (सहासम्) "न केवलं मादृशो नीतिवित् । भवादृशो वेदान्ती चोपेक्षितुं प्रभवेत् । तस्य तस्य प्रारब्धं तेन तेन भुज्यते । सर्वशक्तमीश्वरं विना को वा कस्यापदं निवर्तयितुं क्षमः ?"

सुमित्रः – (सहासम्) "मादृशस्य वेदान्तिनस्त्वादृशस्य नीतिविदश्च मैत्रीतः केनचिदुदारेण सह विरोध एव वरम् । स आपन्नं शत्रुमपि याचमानं साहाय्यकदानेनोद्धरेत् ।"

भवशर्म – " भाव ! कस्तव वादस्यास्य गुप्त आशयः कथय स्पष्टम्। किं त्वं वीरमित्रस्यार्थे कन्यावरणायागतः? उताहो ऋणयाञ्चायै?"

सुमित्रः – "नाहं त्वामृणं याचितुमागतः । सम्प्रति यदस्ति मम ऋणं न तद्बाधकम् । स्वल्पवृद्धि च। तस्मात्तत्परिहरणाय ऋणान्तरकरणम् अनावश्यकम् । ततोऽपि स्वल्पवृद्धिऋणं दातुं यदि ते प्रीतिः न तत्प्रत्याख्यायते। (ईषन्निकटमागत्य) यदन्यत्त्वया पृष्टम् तत्रास्ति किञ्चित्सत्यम् । नाहं सामन्तेन प्रेषितः कन्यावरणाय । तथापि यदि त्वमनुमन्यसे वत्सां चन्द्रप्रभां वीरमित्राय दातुम् । तर्हि न तत्कार्यमसुकरम् ।"

भवशर्म – (आत्मगतम्) "अयं समर्थ एव सङ्घटयितुम् । अस्मिन् वीरमित्रस्य महती पूज्यबुद्धिः ।(प्रकाशम्) भार्यया पुत्राभ्यां दुहित्रा च सहालोच्य दिनत्रयमध्ये वदिष्यामि निश्चयम् ।"

सम्प्रति मन्दिरान्तादतिथिगृहपतिभ्यामेको मनोहरो गीतध्वनिः श्रुतः । तस्येदमवलम्बकं पद्यं भवति –

९. अलिस्तथामहोत्पले प्रतार्य मञ्जुलस्वनै-
रथोन्मुखे महोत्पले गतोऽधमः सुमान्तरम् ।
न तस्य हीयते मनो न दूयते न लज्जते
तथाविधं तु कीटकं विनोदतो विधिर्व्यधात् ।।" (पञ्चचामरः)

तद्गीतमाकर्ण्य भवशर्मा म्लानवदनोऽभूत् । भवशर्मणः पुत्री चन्द्रप्रभैव तस्य गीतस्य गात्री । तस्य गूढोऽर्थो भवशर्मणा ज्ञातः । ज्ञास्यन्ति प्रकरणान्तरे पाठकाः । गीतस्य मनोहरस्वरालापेनाकृष्यमाणं सुमित्रस्य चित्तं तदर्थविमर्शनपर्यन्तं नान्वधावीत् । तस्मिन् गानरसानुभवे सुमित्रो भवशर्मणो म्लानं वदनं न लक्षीकृतवान् । गीते समाप्ते भवशर्माणमेवम् अप्राक्षीत् । "भाव ! किं गीतस्यास्य गात्री वत्सा चन्द्रप्रभा ?"

भवशर्म - (मन्दस्वरेण) "अथकिम् ।।"

सुमित्रः - "यथा वत्सायाः साहित्यमद्भुतं तथा सङ्गीतमपि ।"

पुनरन्यो गीतध्वनिः श्रुतः । यस्येदमवलम्बकं पद्यम् ।

१०. "स्मरजितं गिरिजा हरतु का घनता ?
स्वयमियं लघुता व्रजति कामजिता ।।" (मधुमतीवृत्तम्)

सुमित्रोऽस्य मिताक्षरस्य पद्यस्य शब्दार्थावुभावप्यन्वभूत् । आह च सन्तुष्टो भवशर्माणम् - "भाव ! शृणोम्यस्माकं चन्द्रप्रभा कवीश्वरी चेति । मन्ये तदेतत्पद्यं चन्द्रप्रभायाः !"

भवशर्म - "किं निर्दुष्टा कविता ?"

सुमित्रः - "न केवलं निर्दुष्टा । पुष्टार्था च भवति ।"

भवशर्म - "अधुना जितं वत्सया । यस्याः कवितां त्वादृशो महापण्डितो मोदेन श्लाघते । मया च जितम् । य एतावन्तं कालं वत्सायाः स्वातन्त्र्यं नापाहरम् । परतन्त्राणां हि नैवं वर्धितुमवकाशः ।"

सुमित्रः - "तत्रभवतो राणायनस्य शिष्यासु किं सन्ति चन्द्रप्रभा-वदनवद्यकविता इतराः ?"

भवशर्म - "तिस्रः सन्त्यन्याः । राणायनस्यैव कन्या मनोरमैका । आन्ध्रेश्वरस्य सुचन्द्रभट्टारकस्य कन्या मधुमत्यपरा । इतरा भट्टनागेश्वरदुहितुर्मालत्याः पुत्री फलिनी ।"

सुमित्रः - "उज्ज्वलोऽयं कालः । तथापि पूर्वाचाराणां वीर्यहा । माभूद्धर्मविप्लव इति भगवन्तं वैवस्वतं प्रार्थये ।"

भवशर्म - "भाव ! अवशिष्टं किमपि प्रकृतम् । कथय स्पष्टम् । तवास्ति कियदृणम् ?"

सुमित्रः - "षट्सहस्रं कार्षापणाः ।"

भवशर्म - "कीदृशी वृद्धिः ?"

सुमित्रः - "प्रतिवर्षं शतस्याष्टौ ।"

भवशर्म - "मन्ये ; काश्यपो विशालाक्ष एव तवोत्तमर्णः" ।

सुमित्रः - "अथकिम्" ।

भवशर्म - "तव भूमेरादायः कियान् ?"

सुमित्रः - "षट्कार्षापणशतानि ।"

भवशर्म - "भाव ! प्रायो वृद्धिरेव ग्रसति तव भूम्यादायम् । जीवसि निजेन पुरुषकारेण । न क्षेत्रेण । अन्यत्पृच्छमि । तव क्षेत्रस्य गरिष्ठं मूल्यं कियत् ?"

सुमित्रः - "द्वादशसहस्राणि ।"

भवशर्म - "एवं चेदर्धक्षेत्रं विक्रीयताम् । अहं दास्यामि तद्गरिष्ठं मूल्यम् । बान्धवाय ऋणप्रदानं तु मया जातुचिदपि कर्तुमशक्यम् ।"

सुमित्रः - "अहमप्यालोच्य कथयिष्यामि दिनत्रयमध्ये । गुरुजयन्ती-पर्यन्तमत्रैव तिष्ठेयम् । परश्वो गुरुजयन्ती ।"

सुमित्रस्य वाक्यावसाने पितरमतिथिं च भोजनार्थमाह्वातुं चन्द्रप्रभा तां शालामविक्षत् । गगनमध्यमारूढा स्वाती तारेव ज्वलन्ती सा सुमित्रस्य चक्षुषोर्विस्मयमजीजनत् । स एव ममंस्थ तदानीम् -

"यस्येयं शयनसखी स्यात् । तस्यायमेव लोको नाकः ।"

नवमं प्रकरणम्

## सुमित्रस्य राजकीयरङ्गे प्रवेशः

भवशर्मणो गृहे पुरुषाणां रात्रिभोजनं संवृत्तम् । भोजनसमये प्रायेण स्त्रीविद्यासम्बद्धाः कथा अचालिषुः । गृहपतिस्तस्य प्रौढौ पुत्रौ देवशर्म-विष्णुशर्माणौ च सहातिथिना तत्र भाषणे भागस्वामिनोऽभूवन् ।

षोडशाद्वर्षादर्वागेव स्त्रिया गुरुकुलविद्यासमापयितव्येति तु मित्रस्य वादसारांशः । तं देवशर्मासमर्थितवान् । विद्याग्रहणस्य कालसङ्कोचो नवर्तितव्य इति भवशर्मणो वादः । तमन्वमोदिष्ट विष्णुशर्मा वादमध्ये भवशर्मणः पत्नी वैजयन्ती प्रविश्याष्टादशं वर्षमवधिं सूचिवती । तत्सूचनं न कस्मैचित्पक्षाय रुरुचे । सर्वथानेष्टं गान्धर्वावकाशदानं सुमित्रदेवशर्मणोः । सर्वथाऽनिष्टो विद्याग्रहणस्य कालसङ्कोचो भवशर्म-विष्णुशर्मणोः ।

भोजनान्ते भवशर्मा कस्मैचित्कार्यायापराजिता मठं गतः । अपराजिताम् अधिकृत्य पाठकेभ्य उत्तरत्र निवेदयिष्यामः । अथ सुमित्रो विष्णुशर्मणा सह सम्भाषितुमैषीत् ।

सुमित्रः पण्डितोऽपि गर्वहितः । वादप्रियोऽपि निरभिमानः । बहुविषयज्ञोऽपि बालस्यापि वचनोपन्यासानां श्रोता । स्वार्थैकलक्ष्योऽपि प्रायः परेषामबाधकः। ऋणदरिद्रादिकष्टपराहतापि शातधारैव तस्य बुद्धिः ।

आत्मनः कुट्यां समुपविष्टं विष्णुशर्माणं सुमित्रः प्राप्तः । तमुपस्थितं पितृबन्धुमालोक्य विष्णुशर्माऽऽसनादुत्थाय प्रत्युदगमत् ।

"तात ! किमयं ते निद्रितुं कालः ?" इत्यप्राक्षीत्सुमित्रः ।

विष्णुशर्मा - "यावत्परन्तपोदयङ्करसङ्गौ जीवतस्तावदस्माकं रक्षिपुरुषाणां दिवैव निद्रितुं कालः ।"

सुमित्रः - "किं सम्प्रत्येकं मुहूर्तं मया सह सम्भाषितुं तवास्त्यवकाशः ?"

विष्णुशर्मा - "उपविशतु तत्र भवानासने । अयमहमस्मि गृहीतक्षणस्तत्र भवता सह संभाषितुम् ।" इत्यासनं दर्शयति ।

उपविष्टः सुमित्र आसने । अनन्तरमुपविष्टो निजासने विष्णुशर्मा । ज्वलति विष्णुशर्मणोऽन्तरात्मेव पूर्णस्नेहो दीपः । रात्रेः पूर्वप्रहारोऽतिक्रान्तः । वीथ्यां जनानां यातायातकोलाहलो नाधुनाप्युपरतः ।

सम्प्रति गिरिव्रजनगरपालं विष्णुशर्माणं पाठकानां किञ्चित्परिचितं कुर्मः । स धनुरागमे द्रोणादनवमस्याचार्यविषमसिद्धेरधीतसर्वशस्त्रविद्यः प्रियः शिष्य।। महाबुद्धिपराक्रमस्य पण्डितश्रीनाथप्रियनन्दनस्य राजस्यालस्य राष्ट्रियस्य सत्यरथस्य पुरन्दरस्य विष्णुरिव युज्यः प्रियः सखा । नगररक्षिणां प्रियः कृतहस्तः । कृपाणिनां प्रियो लघुयोधी । वृद्धानां प्रियो विनीतः । प्राज्ञानां प्रियो बुद्धिमान् । धार्मिकाणां प्रियः । शीलवान् । दरिद्राणां प्रिय उदारः । चक्षुष्मतां प्रियो रूपवान् श्रोत्रवतां प्रिय मधुरवाक् । सूक्ष्मदृशां प्रियो विद्वान् । स्थूलदृशां प्रियो बलवान् । आत्मनः प्रियः

कर्ता । लोकस्य प्रियो व्यवहर्ता । मित्राणां प्रिय उपकर्ता शत्रूणां च प्रियो दयावान् । नयविदां निदर्शनभूतो नयवित् । वक्तृणामुपमानभूतो वक्ता । धीराणां प्रतिमानभूतो धीरः । गम्भीराणां दृष्टान्तभूतो गम्भीरः । शूराणामुदाहरणभूतः शूरः । वयसि तृतीये दशके न्यस्तपादोऽपि पलितशिरस्कैः पण्डितैस्तुल्यो लोकानुभवे । मासद्वयात् प्रागेव सार्वभौमेन नगरपालत्वेनाधिकृतः ।

सुमित्रः - "तात, भारद्वाज ! त्वादृशस्य सरलवर्तनस्याग्रे नोचितो मादृशस्य परोक्षया विधया प्रसङ्गः । अतः प्रत्यक्षं निवेदयितुमिच्छामि निजं कार्यम् । शृणु करुणया ।"

विष्णुशर्मा - "ब्रवीतु तत्र भवान् ! अयमहं शृणोम्यवहितः ।"

सुमित्रः - "अहमस्मि ऋणग्रस्तः । ग्रामे क्षेत्रस्यादायं प्रायो ग्रसति ऋणस्य वृद्धिः । कुटुम्बजीवनाय मार्गान्तरमेवान्वेष्टव्यम् । ग्रामे न कश्चिदपि पुरुषकारः फलेत् । अतो गिरिव्रजमागन्तुमिच्छामि जीविकाय । त्वामेकमभ्यर्थये । प्रदर्शय मे पुरुषकारस्य द्वारम् । अवसन्नस्ते बन्धुरहम् । यदि त्वमिच्छसि ज्ञातुं शक्ष्यसि मदुद्धरणोपायम् ।"

विष्णुशर्मा - "सन्ति भवादृशानां धनार्जनाय बहूनि द्वाराणि राजधान्याम् । शक्यान्येव प्रदर्शयितुम् । भवानेव वा बोद्धुं शक्नोति यद्यालोचयति । अस्त्येक एव मार्गो यत्र मया भवतः साहाय्यकं कर्तुं शक्येत । स तु दुर्गमोऽपायबहुलश्चेति कष्टम् ।"

सुमित्रः - "सूचय तं मार्गम् । पश्यामि धिया शक्यो वावलम्बितुम्

अशक्यो वेति ।"

विष्णुशर्मा – "यावेतौ राष्ट्रं बाधेते परन्तपोदयङ्करौ नाम दस्युसंङ्घौ तयोः सभ्याः प्रायेण ग्रामेषु नगरेषु च तत्र तत्र वसन्ति स धारणप्रजावत् । तान्विज्ञाय प्रभुत्वाय निवेदयितुं बुद्धिमतामभयङ्करो नाम सङ्घ एको निर्मीयते प्रभुत्वेन । तत्र सभ्यानामस्ति वेतनम् । सन्ति च बहुमानानि कार्यानुसारेण। प्रायश्चाराणां कृत्यं तैः कर्तव्यम् । यदि जानीयुस्तान् दस्यवस्तर्हि बाधेरन्निति साधारणबुद्धिग्राह्यो विषयः । यदि भवानिच्छति शक्ष्याम्यहं भवन्तं तत्र प्रवेशयितुम् । मार्गस्त्वपाय बहुलः । आलोचयतु भवान् ।"

सुमित्रः – "सर्वत्र बुद्धिप्रमादस्य फलमनुभवितव्यम् न केवलमत्र । बुद्धिकवचानामेतादृशापायेभ्यो न भयम् । तस्मादयमहं सिद्धोऽस्मि तं सङ्घं प्रविश्य सर्वात्मना कर्म कर्तुम् ।"

विष्णुशर्मा – "किमस्यामेव रात्रावभयङ्करसङ्घं प्रवेष्टुमिच्छति भवान् ?"

सुमित्रः – (सोत्साहम्) "अस्मिन्नेव क्षणे यदि त्वमनुजानासि ।"

विष्णुशर्मा – "भवतु ।"

अथ ज्वलतो दीपस्याग्रे सत्यप्रमाणपूर्वकं सङ्घनियमानुपालनं प्रतिश्रुत्य गौतमः सुमित्रोऽभयङ्करसङ्घं प्रविष्टः।

पुनः सम्भाषणमारब्धम् ।

सुमित्रः - "तात ! अभयङ्करसङ्घस्य नायकः कः ?"

विष्णुशर्मा - "युवापि बहुश्रुतो बलवतां बुद्धिमतां चाग्रगण्यः शस्त्रविदां शास्त्रविदां च मूर्धन्यः पुरुषतारतम्यज्ञः परमाचार्यश्रीनाथभट्टपादानां पुत्रो राष्ट्रियः सत्यरथोऽभयङ्करसङ्घस्याध्यक्षः ।"

सुमित्रः - (सादरम्) "किमस्माकं गुरुपुत्रः ?"

विष्णुशर्मा - "युष्माकं गुरुपुत्रः । अस्माकं तु परमगुरुपुत्रः ।"

सुमित्रः - "तात ! तव तत्र कीदृशोऽधिकारः ?"

विष्णुशर्मा - "अहमस्मि सङ्घस्य कर्म सचिवयोरन्यतरः ।"

सुमित्रः - "किंस्तः पृथग्द्वे शाखे सङ्घे ?"

विष्णुशर्मा - "स्तः । यद्यपि सामात्यस्य सम्राज एक एवायं संघो द्विनामा कार्यवैचित्र्यादिति मतिः तथापि राष्ट्रियो मन्यते पृथगेव संघौ द्वाविति। तस्मात्तेनोदयङ्करसङ्घशोधनायैका परन्तपसंघशोधनायान्या च शाखे द्वे पृथक्कुरुते । तयोःकुत्र कर्म कर्तुमिच्छति तत्रभवान् ?"

सुमित्रः - "यत्र त्वमधिकारी तत्राहं कर्म कर्तुमिच्छामि ।"

विष्णुशर्मा - "एवं यदि परन्तपसङ्घस्योपरि भवतः प्रज्ञा प्रयोक्तव्या भवति । आलोचयतु भवान् । उदयङ्करसङ्घादपि परन्तपसङ्घोदारुण

इव दृश्यते । मत्कुणवधादपि मनुष्यवधस्तेषामकिञ्चित्करः ।"

सुमित्रः - "नास्ति मे प्राणभयमीदृशेषु कार्येषु तस्मात्परन्तपसङ्घ-शोधने तवैवानुचरो भवेयम् । तात ! कुतूहलादन्यत्पृच्छामि । उदयङ्करसङ्घपरिशोधनशाखाधिकारी कर्मसचिवः कः ?"

विष्णुशर्मा - "परिव्राजकश्रेष्ठोजम्बुकमुनिः । सवीतरागोऽपि राष्ट्रक्षेमाय सम्राजोऽनुरोधेन पदमिदमङ्गीकृतवान्। जानात्येव भवान् स पूर्वाश्रमे सम्राजोऽन्तरङ्गसचिवोऽभवदिति ।"

सुमित्रः - "किं न जानाम्यहं मम सतीर्थ्यं मौद्गल्यम् ? भट्टपादानां शिष्येष्वष्टौ दिग्गजबिरुदधारिणः । तेषु मौद्गल्यो जम्बुकः काश्यपो विशालाक्षः वासिष्ठो राणायनः भार्गवः सत्यव्रतः काण्वो वाचस्पतिः तव पिता, ब्रह्ममठग्रामवासी कीर्तिशेषः कौशिको वरकर्मा च सप्त ।"

विष्णुशर्मा - (सस्मितम्) "मन्ये ; अष्टमो दिग्गजस्तत्रभवान्गौतमः सुमित्रः ।"

सुमित्रः - "सत्यम् । तथाप्यसारो दारिद्र्याच्छुष्कमदधारः ।"

विष्णुशर्मा - "नश्यतु दिग्गजस्य दारिद्र्यम् । सारश्च वर्धताम् । मदधारास्तु मा पुनरायासिषुः ।"

सुमित्रः - "फलतु तवाभिलाषः । अथादिश सङ्घस्य कार्ये माम् । माभूदेषा व्यर्था रात्रिः ।"

विष्णुशर्मा – "कियज्जानाति परन्तपसङ्घमधिकृत्य भवानितः प्राक् ।"

सुमित्रः – "कियदपि ज्ञातं जनश्रुतितः कियदपि ज्ञातमात्मप्रज्ञाबलात् । उभयत्रापि सत्यं कियद्वेति स्पष्टं करिष्यति कालः ।"

विष्णुशर्मा – "उभयं च श्रोतुमिच्छामि ।"

सुमित्रः – "निशम्भुः किल सङ्घस्य नायकः । तस्य लक्ष्यं किलार्यावर्ते दक्षिणापथे च पुनरपि क्षत्रियाधिकारसंस्थापनम् । तद्द्वारा च वर्ण-धर्मरक्षाः । पुरञ्जयस्य भ्रातृपुत्रः समितिञ्जय एव निशम्भुनाम्ना प्रच्छन्न इति केषाञ्चिन्मतम् । सुचन्द्रजितः पलायितः कुन्तलपतिर्बलभीम इत्यपरेषाम् । एतावज्जनश्रुतितो ज्ञातम् । अथेयती मम प्रज्ञाया अनुमितिः । निशम्भुनाम न सङ्घसङ्केतजम् । पश्य गजवीर नामोदयङ्करसङ्घपतेः । तत्सङ्घसङ्केतकृतं स्यात् । निकुम्भवन्निशुम्भवच्च निशुम्भनामेदं यातुधानस्येव प्रतिभाति मे । स चायं निशम्भुः पितृसम्बन्धाद्राजन्यः मातृसम्बन्धाच्च यातुधानः स्यात् । समितिञ्जयोऽस्य जनयिता स्यात् । जननी सुचन्द्रहतस्य दुर्जयस्य दुहिता स्यात् । उताहो सन्निकृष्टा बान्धवी ।"

विष्णुशर्मा – (स्वगतम्) "अद्भुताऽस्यानुमानधोरणी । स्पृशतीव सत्यस्य पार्श्वम् । अयमतीवोपयुक्तो भवेत्कार्यसाधनाय ।" (प्रकाशम्) "एतदेवानुमानमवलम्ब्य परीक्षतां परन्तपसङ्घं भवान् ।"

सुमित्रः – "अन्यच्च ममानुमानम् । प्रायेण सन्धिरभूत्परन्तपोदयङ्कर-सङ्घयोः । गजवीरस्त्वपयातात्सत्यसेनान्नेतरः । अङ्गराष्ट्रकणङ्गजवीर-पक्षिणे विकीर्य सर्वमार्यावर्तं सहदक्षिणापथेन कबलीकर्तुं निशम्भो-

र्यत्नः । अन्तःसोपिकणो गजवीरस्य कुक्षिपर्यन्तं गच्छेद्वा न वा ?"

विष्णुशर्मा - "युक्तं तत्र भवतोऽनुमानं सर्वं यदि स्थूलदृशा पश्यामः । तत्र सूक्ष्मशोधनं च कार्यम् । अस्यां रात्रौ भवताविश्रान्तिः कर्तव्या । श्वोराष्ट्रियेण सहालोच्य वक्तास्मि भवतः कर्तव्यम् ।"

सुमित्रः - "मन्ये नगरपालाधिकारोऽन्यः । अभयङ्करकर्मसचिवाधि-कारोऽन्यः । उभावपि किं त्वयानिर्वर्तयितव्यौ ?"

विष्णुशर्मा - "सत्यम् । तत्र प्रथमेऽधिकारे सामान्यतः सर्वैः सह दस्युभिर्ममास्ति बन्धत्वम् ।"

विष्णुशर्मणो वाक्यान्ते कश्चिद्रक्षिपुरुषोऽन्तः प्रविश्य ससम्भ्रममाह - प्रभो ! सहस्रपतिर्वीरसिंहो बालारण्ये चोरेण बलवत्प्रहृतो विषमायां दशायां वर्तते ।"

सुमित्रः - "किं मौद्गल्यो जाम्बुकिर्वीरसिंहः ?"

रक्षिपुरुषः - "अथकिम् ।"

सुमित्रः - "जम्बुकमुनिमुद्दिश्यैष प्रहारः । न वीरसिंहमुद्दिश्य ।" इति शनकैर्विष्णुशर्मणः कर्णे कथयति ।

विष्णुशर्मा न किञ्चिदुक्तवान् । त्वरयोत्थाय सुमित्रं शेतुं सम्प्रेष्य सायुधः सपरिजनो बालारण्यं प्रति प्रस्थितः ।

दशमं प्रकरणम्

## आज्ञापत्रं तु दृष्टम्

परेद्यवि मध्याह्नभोजनादनन्तरं गिरिव्रजवासिनो रणन्धरस्य गृहे मुख्यशालायां द्वौ पुरुषावेका युवतिश्च समुपाविक्षन् । पुरुषयोरेको गृहपतिः । इतरस्तस्य मातुलो विशालाक्षः । अद्यैव देववाटिकातः समागतः । युवतिस्तु वैशालाक्षी पूर्णा ।

विशालाक्षः पञ्चचत्वारिंशद्वर्षदेशीयः । निगृहीतकामः सुतेजाः सुबलः सुपुष्टः । पञ्चविंशतिवर्षो युवक इव पटुरुत्साहवान् । शतवर्षो वृद्ध इव विदितविविधलोकयात्राविशेषः । चन्द्रधवलोऽपि सर्वनीलात्यायतबहुलश्मश्रुपटलो भीषणमुखः ।

रणन्धरश्चतुर्विंशतिवर्षवयस्को युवा । तप्तकार्तस्वरवर्णः स्थूलोन्नतदृढगात्रः । प्रज्वलद्रक्तान्तदीर्घनेत्रः । गजादपि त्राणवान् । सिंहादपि विक्रमवान् । श्येनादपि वेगवान् । युवतिचित्ताकर्षकरूपोऽप्यपापो ब्रह्मचारी ।

विशालाक्षो दीर्घदर्शी रणन्धरः प्राप्तकालज्ञः । विशालाक्षो नयाभिमानी । रणन्धरो विक्रमाभिमानी । विशालाक्षः कार्येषु पूर्वापरविमर्शी । रणन्धरः साहसी । विशालाक्षो मितव्ययः । रणन्धरो महोदारः । विशालाक्षः शस्त्रविदपि शास्त्रेष्वद्वितीयः । रणन्धरः शास्त्रविदपि शस्त्रेषु निरुपमानः ।

पूर्णा शस्त्रेषु शास्त्रेषु च रणन्धरस्य सब्रह्मचारिणी । विशालाक्ष एवोभयत्र तयोराचार्यः । परमोत्कृष्टसुन्दराकृतेस्तस्याः सान्निध्यं तस्मै सामान्य-गृहायाकर्षतीव कमलादेवीम् ।

सम्भाषणमारब्धम् ।

पूर्णा – "अद्य प्रातरागत्यपण्डितसुमित्रः पितृष्वसुरग्रे महान्तमग्निं प्रज्वाल्य गतः । अहं किल तातेन सह कलहं कृत्वा समागतेदं नगरम् । तस्य कथानकं भावो यद्यपि न विश्वसितवान् तथापि पितृष्वसा मयि संशयमकार्षीत् । कथयतु सत्यं तातः ।"

विशालाक्षः – "अत्र सुमित्रस्य न कश्चिद्दोषः । अहमेवास्याः कथायाः स्रष्टा ।"

रणन्धरः – " मातुलस्य किमीदृशकथासर्गे प्रयोजनम् ।"

विशालाक्षः – "सम्प्रति सामन्तवीरमित्रः सुन्दरीं विदुषीं च कन्यां परिणेतुं प्रयतते । यदि वीरमित्रो मातामहस्य महामन्त्रिणः शिवनाथस्य द्वारा मां पूर्णां याचिष्यते तदा मया प्रत्याख्यातुमशक्यम् । दातुं चाशक्यम् । नास्माकं पूर्णायाः सोऽनुरूपो वरः तस्मात्पूर्णामहमत्र सम्प्रेष्य कथामेकां सृष्ट्वा सुमित्रायाकथयम् । "मयि वीरमित्रायात्मानं दातुं प्रयतमाने तद्विज्ञाय मया सह कलहायमाना पूर्णा मह्यमकथयित्वैव मम स्वसुर्गृहान्प्रत्यपयाता " इति । स व्यजानाद्युवयोः परस्परप्रेमैवास्या अविधेयतायाः कारणमिति । स च वीरमित्रस्याप्तः पण्डितः । न जोषमासीत स्वप्रभवे कथामिमामकथयित्वा । तेन स इतः प्रयत्नमेव

न कुर्यात् । तदस्माकं क्षेमम् ।''

रणन्धरः – ''प्रत्याख्याने किं कष्टम् ? किं करिष्यत्यस्मान्महामन्त्री ?''

विशालाक्षः – ''अपकृतः सर्पो यत्कुर्यात्प्रत्याख्यातप्रार्थनः शिवनाथस्तत्कुर्यात् । स सर्पादप्यधिको वैरवान् । व्याघ्रादप्यधिकः क्रूरः । शर्कराकञ्चुकं दारुणं विषमेव सः । अस्ति बहुरन्ध्रदर्शिनी प्रज्ञा । अस्ति सर्वतो मुखो महानधिकारो हस्ते । किं किमनिष्टं परस्मै न कुर्यात्स यदि विदधीत विरोधम् ।''

रणन्धरस्तीव्रया दृशा गगनं वीक्षमाणः शिरः कम्पितवान्।

पूर्णा – ''अपयातो मे मनसो भारः । अस्त्वियं कथा । अन्यत्पृच्छामि बहोः कालाज्जिज्ञासितम् । स राज्यभ्रष्टो मे मातुलः कापेयः सत्यसेनभट्टारकः सम्प्रति कुत्र विद्यते ?''

विशालाक्षः – '' वत्से ! तस्य जीवितं यथा शोचनीयं तथा गाढान्धकारबन्धुरम् । स हिमाचले तपश्चरतीति विज्ञायते ।''

पूर्णा – ''तेन सहापयातस्य दण्डनायकबलभद्रस्य वार्ता किं विज्ञायते ?''

विशालाक्षः – '' स किल काश्मीरं गतः । एतावत्येव तस्य वार्ता ।''

पूर्णा – ''प्रभुं विसृज्य काश्मीरगमने तस्य क उद्देशः स्यात् ?''

विशालाक्षः – "प्रद्योतनस्यावशंवदो बलवत्तरश्च तदा काश्मीरपतिर्मित्रवर्धन आसीत् । राज्यभ्रष्टस्य प्रभोरर्थे तस्य साहाय्यकं याचितुं स दण्डनायकः किल जगाम काश्मीरम् । प्रायो मार्गमध्ये स विपन्नः स्यात् । अनन्तरं तस्य वार्तापि न ज्ञायते ।"

पूर्णा – "सम्प्रति कः काश्मीरपतिः ?"

विशालाक्षः – "मित्रवर्धनस्य यशोवर्धनो बलवर्धनश्चेति द्वौ पुत्रौ । पूर्वः पितरि जीवत्येव मृतः । पितुरनन्तरं बलवर्धनो ज्येष्ठस्य भ्रातुर्बालं कीर्तिवर्धनं नाम पुत्रं कारागारे संस्थाप्य स्वयमभिषिक्तोऽभवत् । स एवाद्यपि काश्मीरपतिः । स प्रद्योतनस्य परमं मित्रम् बलवर्धनस्य भगिन्येवास्मिन् गिरिव्रजे प्रसिद्धा विशोका नाम क्षत्रियपरिव्राजिका । श्रीनाथभट्टपादानां पुत्रिका निर्विशेषा प्रिया शिष्या । तस्यै विरक्तायै भगिन्यै बलवर्धनोऽनितारापेक्षजीवनाय बहुलं धनं दत्तवान् । अस्यां नगर्यामपराजितैका बहुलश्रीः परिव्राजिका । विशोकाऽन्या ।"

पूर्णा – "मन्ये दुरदृष्टशालीकीर्तिवर्धनोऽद्यापि कारागृहे ।"

विशालाक्षः – "समाप्तं बभूव किल तत्रैव तस्य जीवितम् ।"

पूर्णा – "तात ! मगधेश्वरः सत्यसेनभट्टारकस्य राज्यं यदपाहरत्तत्र किं कारणम् ?"

पूर्णादेव रक्षिता मुखात्प्रागेव विदितवृत्तान्तापि तत्र पितुरभिप्रायं ज्ञातुं पुनरप्राक्षीत् ।

विशालाक्षः - "वेलातिगा साम्राज्याशा । अथवा नैसर्गिकी क्रूरबुद्धिः ।"

पूर्णा - "किं तादृशः क्रूरो मगधेश्वरः ?"

विशालाक्षः - "स द्विपाद्व्याघ्रः । श्वेतो राक्षसः । तस्य भूभुजो राजकीयचरित्रस्य सारांशः कतिपयैर्वाक्यैः कथ्यते । शृणु ज्ञास्यसि तस्य तत्त्वं तस्यास्मिन्राज्यकाले चतुरङ्गबलमवर्धत राष्ट्रस्य । नेत्रजलं च प्रजानां करभारपीडितानाम् अवर्धन्त राष्ट्रस्य सीमाः । क्रोधानल-धूमाश्च परराष्ट्रप्रमुखानाम् । अवर्धताधिकारिणां दर्पः अक्षीयत पौरजानपदानाम् । अवर्धत धनं राजकीयम् । अक्षीयत देशीयम् । स्मरणीयान्यभवन्वितरणानि । दर्शनीयानि प्रतारणानि । कीर्ति-शेषाण्यभवन्प्रायः सज्जनचरितानि । अनल्पपोषाणि दुर्जनविलसितानि । एवमपि शत्रूणां जेतुर्वीराणां नेतुर्नरपतेरस्य यशसो नास्ति लोपः ।"

पूर्णा - "मन्ये तस्य राजकीयचरित्रे राजसेनाकुमार्याः स्नुषात्वेन ग्रहणमेकं श्लाध्यम् ।"

अयमपि पितुरभिप्रायं ज्ञातुमेव पूर्णाया उपन्यासः ।

विशालाक्षः - "अद्याप्यङ्गराष्ट्रे बहवः सन्ति वीरपुरुषाः । ते महोदारे सत्यसेनभट्टारके पितरीवाद्याप्यनुरक्ताः । तांत्समाश्वासयितुमेतन्नाटकम् । अनेनापयातः सत्यसेनभट्टारकश्च समाश्वस्तो भवेदिति तस्य दृष्टिः । वत्से! एतादृशस्य समुज्ज्वलराज्यस्य एतादृशस्यासाधारणविक्रमस्य, एतादृशस्य जागरूकस्य एतादृशस्य प्रतिदिनप्रवर्धमानप्रतापस्य, एतादृशस्य प्रचण्डसैन्यस्य, एतादृशस्य दृढरूढमूलस्यापि सम्राजो

जीवत एव पलायितात्सत्यसेनभट्टारकाद्भवति भयम् । अज्ञात-दविष्ठप्रदेशस्थस्यापि सत्यसेनभट्टारकस्य प्राणवायवः प्रतिक्षणं कम्पयन्तीव तस्य सिंहासनम् ।"

पूर्णा - "आश्चर्यमिदम् । अथवा महापुरुष एकाक्यपि शत्रुभयदः।"

विशालाक्षः - "अन्यश्चास्त्युद्देशः प्रद्योतनस्यात्र विवाहे तस्य ज्येष्ठः पुत्रः सम्प्रति नष्टः । स यदि दैवात्पुनर्लब्धः स्यात्तर्हि द्वितीयमिममङ्ग-राष्ट्रेऽभिषेक्तुं पूर्वसन्नाह एषः ।"

पूर्णा - "कनिष्ठोपि पट्टमहिषीपुत्रः किलोत्तराधिकारी । केभ्यश्चिदेवं श्रूयते ।"

विशालाक्षः - "द्वावपि महिष्यावेव । न द्वितीयां भोगिनीं वक्तुं कस्यापि नगर्यामत्र साहसम् । यदि स नष्टो मिलेत्स एवोत्तराधिकारी सिंहासनस्य भवेदित्यत्र न कश्चित्संशयः । आचार्यस्य तन्मातामहस्य प्र भावस्तादृशो राजधान्याम् । सोऽत्राकिरीटः सम्राट् । अनायुधः सर्वातिगो वीरः । अभ्रुकुटी कुटिलमु खो भयङ्करः । मन्दशान्तस्वर आदेष्टा । विदुषामपि संशयहारी विद्वान् । आचार्याणामप्युपदेशकृदाचार्यः । परिषदामपि प्रमाणमेकबद्धा परिषत् । तस्य बन्धुबलमप्यपारम् । सप्त मातृका इव तस्यप्रसिद्धाः सप्त दुहितरः । तासां सम्बन्धान्नगरमिदमाचार्यस्य चरणबद्धम् ।"

पूर्णा - "तासां कुलविस्तरं श्रोतुमिच्छामि ।"

विशालाक्षः – "आद्या कात्यायनी । दण्डनायकस्य शस्त्रविद्याचार्यस्य पूज्यपादस्य सामन्तविषमसिद्धेः पत्नी । द्रोणस्याश्वत्थामेव पितुरनवमो दण्डनायकः सर्वसिद्धिर्विषमसिद्धेः पुत्रः ।

द्वितीया भद्रा । मगधसाम्राज्यसेनापतेः कुरूणां भीष्मस्येव शुनकानां प्रवरस्य महावीरस्येन्द्रसेनस्य पत्नी । प्राण्यपत्यरहितापि बहुतटाकारामादिशाश्वतबहुलसन्ताना ।

तृतीया तनुमध्या । कोशाध्यक्षस्य सामन्तहरिमित्रस्य पत्नी । दण्डनायकस्य भूरि विक्रमस्य सिंहवाहनस्य माता ।

चतुर्थी सिनीवाली । राजपुरोहितस्य वाचस्पतेः पत्नी । पितुरप्यधिकस्य निखिलनिगमविदो दिवस्पतेर्माता ।

पञ्चम्येव द्वितीयसार्वभौममहिषी पद्मावती । तस्याः पुत्र एव नष्टो विशाखः । निजकुलकूटस्थस्य भगवतः कुलपतेः शौनकस्य तुल्यो ज्ञानतपसोः । स जीवत्येवेति परिशुद्धान्तःकरणानां भट्टपादानां दृष्टिः । पितुर्वचसैव समाश्वस्ता देवी पद्मावती सप्रत्याशा वर्तते ।

षष्ठी कान्तिमती । महात्मा कन्या कुलाचार्यस्तत्र भवान्त्राणायनः कान्तिमत्याः पतिः । तयोर्दम्पत्योर्द्वेअपत्ये । सुरनारीव सकलनयनाकर्षिणी मनोरमा ज्येष्ठा । कुशाग्रनिशातबुद्धिर्भानुदेवः कनिष्ठः ।

सप्तमी राजकाली। सा दण्डनायकवीरनाथपुत्राय वीरभद्राय दत्ता । स युवैवाङ्गमगधसङ्ग्रामे प्रद्योतनसेनायामद्भुतं कर्म किल

चक्रे । सोऽन्ततोऽपयान्तं सत्यसेनभट्टारकमनुद्रुत्य तं प्राप्तवान् । तत्र युद्धे वीरभद्रस्यायुधात्प्रमत्तं राजानं रक्षितुं राज्ञो दण्डनायको नगधरस्तस्मै ज्वलदग्रायात्मप्राणान् बलिं ददौ । अनन्तरमुन्मीलयता राज्ञाऽभिद्रुतो भीतः शरणं गत्वोदारेण तेन रक्षितस्तिरोहितो नाद्यापि दृश्यते । प्रायेणावमानभिया निजं राजानं प्रद्योतनं द्रष्टुमपारयन् क्वापि प्रव्रजित इति जनवादः । राजकाली तु भर्तुर्वियोगेनोन्मत्ता भूत्वा नाना-विधैरुपक्रमैर्भूयः स्वस्था संवृत्ता । अद्यापि दृश्यते तस्यां किञ्चिदुन्मादशेषः । स्वच्छन्दगमनं सर्वत्र नगरे, स्वच्छन्दभाषणं च स्वाभिमतैः सहनारीपुरुषैरिति तस्याः शेषोन्मादचर्ये । तथापि साऽनवद्यानर्गलकविताधारा । पितृवन्महातपस्विनी । योगसिद्धेति च केषांचिदाशयः । राजप्रासादेऽपि तस्या अप्रतिहता गतिः ।

सप्तभ्यो दुहितृभ्योऽनन्तरोऽष्टमपुत्रो राष्ट्रियः सत्यरथः स देविवर-प्रसादलब्धः कुलदीपकः । पितुरन्यूनोऽनुभावे आत्मनो मन्त्रिमण्डलादपि सम्राजस्तस्मिन्गौरवं महत् । वत्से ! एवं बन्धुबलसम्पन्नः परमाचार्यः ।"

पूर्णा – "तात ! समाप्ताप्रसक्तानुप्रसक्तकथा । पृच्छामि प्रकृतशेषम् । अपयानादनन्तरं कदाचिदपि वा तातेन किं दृष्टो भट्टारकः ।"

विशालाक्षः – "न तस्य शरीरं दृष्टम् । आज्ञापत्रं तु दृष्टम् ।"

एकादशं प्रकरणम्

## पूर्णाया उदयङ्करसङ्घप्रवेशः

पूर्णा पुनरपि पृच्छति – "तात ! यो गजवीरो नामोदयङ्करसङ्घनायकः स सत्यसेनभट्टारकं पुनः सिंहासने स्थापयितुं प्रयतत इति जनवादः । स किं सत्यः ?"

विशालाक्षः – "प्रायः सत्यः स्यात् ।"

रणन्धरो मन्दं स्मयते ।

पूर्णा – (रणन्धरमालोक्य) "भाव ! तव मन्दस्मितस्य किं तात्पर्यम् ?"

रणन्धरः – "मातुलप्रयुक्तस्य प्रायः शब्दस्य मम मन्दस्मितं व्याख्यानम् ।"

पूर्णा – "अहं मन्ये युवामुभावपि स्पष्टं जानीतो गजवीरं तस्य लक्ष्यं कर्माणि च । अयमेव तव मन्दस्मितस्यार्थः । (पितरमालोक्य) तात ! इतः परं नाहमुत्सहे तटस्था स्थातुम् । यदि गजवीरोऽङ्गराजोद्धरणैकलक्ष्यस्तर्हि तस्यानुयायिनी भवेयम् । तस्य महाधार्मिकस्य मातुलस्य पुनः संस्थापनाय पयत्ने भागिनी भवितुमहं सुतरामुत्सहे ।"

विशालाक्षः - "(पुत्रीमालिङ्ग्य सानन्दम्)" वत्से ! अधुना त्वमसि मम पुत्री । अपि चाधुनाहं पूर्णायाः पितरमात्मानमभिधातुं हृष्यामि । सत्यं गजवीर सत्यसेनभट्टारकोद्धरणैकलक्ष्यः । भव त्वं तस्यानु-यायिनी । अहं रणन्धरश्च प्रागेव तदनुयायिनौ संवृत्तौ ।"

पूर्णा - "(रणन्धरमालोक्य) "भाव ! कुतो भवसीदृशासत्यवादी ? अद्य प्रातरेवाभ्यधायि त्वया नाहं गजवीरं किञ्चिदपि जानामीति ।

रणन्धरः - "चोरस्यानुयायी कथं सत्यवादी स्यात् त्वयापीतः परमसत्यवादकुशलया भवितव्यम् ।"

पूर्णा - (हसन्ती) तस्य शिक्षणाय त्वामेव गुरुं वृणै ।"

रणन्धरः -"प्रतिश्रुतपालनात्मकधर्मपाशबन्ध एवेदृशेषु सन्दर्भेष्वसत्यं भाणयति । वयं किं कुर्मः ?"

विशालाक्षः - "सत्यम् । प्रतिश्रुतविरोधेन सत्यवादो मित्रद्रोहस्य पर्यायः। "

पूर्णा - (पितरमालोक्य) "तात ! कोऽयं गजवीरः ?"

विशालाक्षः - "स युधिष्ठिरवद्धार्मिकस्य भीमवत् बलिनः किरीटि-वद्धनुर्विदः कर्णवद्दातुः सूर्यवत्तेजस्विनश्चन्द्रवत्प्रियदर्शनस्य पावक-वद्दुराधर्षस्य पुरन्दरवज्जिष्णोः स्वैरेष्वप्यनृतस्यावक्तुः स्वप्नेपि परद्रव्यमनभिलषतः सङ्कल्पेनापि परनारीरस्पृशतः स्वभावादेव

भर्तुर्निसर्गादेवोपकर्तुः सहृदयानामग्रगण्यस्य शाश्वतप्रीतेरीश्वरभक्तस्य शरच्चन्द्रगौरयशसां कपीनां कुलपुत्रस्य मङ्गलगुणाकरस्याङ्ग-देशाधिपतेः सत्यसेनभट्टारकस्य निसृष्टसर्वाधिकारः प्रतिनिधिः । एतावदेवास्माभिस्तद्विषये वक्तुं शक्यते ।"

पूर्णा - "तं प्रत्यन्यदेकमेव पृच्छामि । वक्तव्यं तातेन ।"

विशालाक्षः - (सदृष्टिक्षेपम्) "किं तत् ?"

पूर्णा - "स किं जातिः ?"

विशालाक्षः - "स जातिरेवास्माकम् ।"

पूर्णा - "अथ ज्ञातुमिच्छामि सङ्घस्य नियमान् । "

विशालाक्षः- "गुप्तरहस्येन सत्यसेनभट्टारके भक्तिमता गजवीरस्या-ज्ञानुवर्तिना च सर्वेण सङ्घस्थेन भवितव्यमिति नियमः ।"

पूर्णा - "आज्ञाप्रदानेषु किं नायकः प्रवर्तते किं छन्दतः ? उताहो मन्त्रिणा मन्त्रिभ्यां मन्त्रिभिर्वासमालोचयति ।"

विशालाक्षः- "तस्य त्रयः सन्ति मन्त्रिणः । एको मगधसाम्राज्ये । एकोऽङ्गराष्ट्रे । एको नित्यं स्वस्य निकटे।"

पूर्णा श्रद्धया शृणोति ।

विशालाक्षः - "प्रतिमन्त्रं द्वौ मन्त्रिणौ भवतः । पार्श्वचर एकः । अपरः कार्यप्रदेशमन्त्री । ताभ्यामालोच्यैव कार्याणि करोति नायकः ।"

पूर्णा - "तात ! किमहं मगधसाम्राज्ये गजवीरस्य मन्त्रिणं ज्ञातुमर्हामि ?"

विशालाक्षः - "अर्हस्येव ज्ञातुम् । शृणु । यं केचित् परिहसन्ति पुरुषसन्तानरहितोऽप्यशक्तेरेव पुनर्दारग्रहणमकुर्वाणो निर्वीर्य इति । यमन्ये निन्दन्ति सर्वकर्मबहिष्कृतोऽनाश्रमो विधुर इति यं मित्राण्यनुशोचन्ति दुरदृष्टशाल्यर्धोन्मत्त इति यं शत्रवो दूषयन्ति जीवन्मृतः कृपण इति । यमवमन्यते ज्येष्ठो भ्राता विद्वानप्यप्रयोजको जन्तुरिति यमुद्दिश्य दिवानिशं परितपति भगिनी सुतरां सुखहीनजीवन इति । यं क्वापि कोणे वर्तमानं भूतपूर्वमङ्गराजभगिनीपतिं तृणवद्गणयतो राजमन्त्रिणौ प्रद्योतनशिवनाथौ । यमात्मनः शिष्येषु दुर्लभसिद्धिकामिनं मानवप्रपञ्चादेवं पृथग्भूतं मन्यते परमाचार्यश्रीनाथभट्टारकः । यमात्मनोऽन्तेवासिषु वनचन्द्रिकातुल्यं कथयति शस्त्रविद्याचार्यो महात्मा विषमसिद्धिः । यमाचष्टे पुरुषकारवर्जितं विपश्चितं राजपुरोहितो वाचस्पतिः । यं भाषते विरक्तं विद्वांसं गौतमः सुमित्रः । यं भणति शापग्रस्तं पण्डितं वनिताजनाचार्यो राणायनः । यमभिधत्ते सभाभीरुं सङ्ख्यावन्तं पण्डितभवशर्मा । यं गदति विस्मृतशास्त्रं भूतपूर्वं शास्त्रिणं परिव्राजको जम्बुकः । यं वदति साक्षरं मूर्खं महाप्राड्विवाकः सत्यव्रतः । सोऽयं परिचितोऽप्यपरिचितो भाग्यवतां बन्धूनां विदितोऽप्यविदितः सब्रह्मचारिणां पण्डितानां ज्ञातोऽप्यज्ञातः शस्त्रविद्याविदा वीराणामवगतोऽप्यनवगतो राजपुरुषाणां शृण्वन्नपि बधिरः पश्यन्न-प्यन्धो गच्छन्नपि पङ्गुः कुर्वन्नप्यलसो वदन्नपि मूको जानन्नपि स्तब्धः प्रियसुहृदः कष्टां दशामापन्नस्य महोदारस्य महोन्नतस्य महर्षिकल्पस्य

सत्यसेनभट्टारकस्य भूयः सिंहासने संस्थापनाय बहुभ्यो वर्षेभ्य उपायान्नालोचयन्नपायान् विचिन्तयंत्साधनान्यन्विष्यन्दैवज्ञान् रहसि पृच्छन्दैवमिष्टं निशासु प्रार्थयन्महतो योगिनो भक्त्या भजंस्तदेवैकं लक्ष्यं ध्यायंस्तव पितैवोदयङ्करसङ्घनायकस्य मगधसाम्राज्ये मन्त्री ।"

पूर्णा साश्चर्यं सकरुणं च शृणोति । रणन्धरः प्रागेव विदितार्थोऽपि मातुलेन कृतमात्मवर्णनं सकरुणमेव श्रौषीत् ।

पूर्णा – "विदितो मगधसाम्राज्ये मन्त्री यादृशः । अङ्गराष्ट्रे मन्त्री कः ?"

विशालाक्षः – "एकनेत्राधिक उशना नये, सनिमेषो बृहस्पतिः प्रज्ञायामराक्षसः कालनेमिर्मायातन्त्रे, अभुजङ्गमः शेषः पण्डित्ये, अवातव्याधिरुद्धवः प्रतिपादननैपुण्ये, अपारशवो विदुर उपदेशचातुर्ये, अदिव्यदृष्टिरपि भावि ज्ञानी, अविरक्तोऽपि स्वार्थरहितः असिद्धाञ्जनोऽप्यदृश्यः, अनधिकारोऽप्यसङ्ख्यानुचरः, राक्षस इव रात्रिसञ्चारी, पिशाच इव शून्यमन्दिरप्रियः, नित्यकम्पनो मगधसाम्राज्य- पीठस्य, नित्यप्रयत्नो नित्यजागरूकः सच्छीलः प्रजावन्द्यः सुखनिरपेक्षः कार्यैकलक्ष्यः, प्रभोरर्थे त्यक्तसर्वस्वः, निर्मातोदयङ्करसङ्घस्य, त्राताऽङ्गराष्ट्रगौरवस्य, धर्ता वज्रबाहुवंशयशसः, हर्ता शुनककुलकीर्तेः सत्यसेनभट्टारकस्य महामन्त्री भारद्वाजः सुमतिरेव गजवीरस्याङ्गराष्ट्रे मन्त्री ।"

पूर्णा – "प्रियं मे प्रियं मे । जीवति स महापुरुषः करोति च महत्कर्म प्रभोरर्थे । तातः ! नायकस्य पार्श्वचरो मन्त्री कः ?"

विशालाक्षः – "स कालनाथो नाम्ना रूपेण च । भीमसेनो बाहुबलेन परिजनबलेन

च । अविद्वानप्यसाधारणप्रज्ञः । सुतरां शीतः सुहृदाम् । यमदूतः शत्रूणाम् । सत्यसेनभट्टारकस्य पूर्वः प्रतीहारी । शूद्रो जात्या । अक्षुद्रो नीत्या ।"

पूर्णा - "अन्यत्कुतूहलात्पृच्छामि । तात ! सङ्घे कति सन्ति स्त्रियः ?"

विशालाक्षः - "पञ्च ।"

पूर्णा - "कास्ताः ?"

विशालाक्षः - "एका परमाचार्यश्रीनाथभट्टपादानां पुत्री घनश्यामगात्री परिशुद्धचित्ता योगोन्मत्ता वीरवरस्य वीरभद्रस्य विरहव्रतं दधाना दयिताविचित्रकविता समुद्दीप्तभोगिन्यपि महायोगिनी सोन्मादगन्ध-वचनापि कमनीयपद्यरचना चोरारेः प्रियसहोदरापि चोरेन्द्रपक्षधरा बिम्बाधरा -"

पूर्णा - "जितमुदयङ्करसङ्घेन । यत्र पदं न्यदधादाचार्यपुत्री राजकाली ।"

विशालाक्षः - "अपरा राणायनस्य सुता कन्याजननुता मृदुमधुराणां गिरां जनयित्री कवयित्री मान्यशमदमा मनोरमा -"

पूर्णा - "इदमपरमदृष्टफलमुदयङ्कर सङ्घस्य ।"

विशालाक्षः - "अन्यास्वप्राणैर्दत्तैः प्रभुप्राणान् रक्षितवतो नित्यं प्रातः स्मरणीयस्य कृतकरणीयस्य स्वर्गजितवतो दण्डनायकनगधरस्य नन्दिनी युवजननयनानन्दिनी नार्यपि वनदुर्गेव पुरुषांस्तृणीकुर्वाणा

पुरुषी स्वभावाद्राज्ञी वाज्ञाकरी विद्वत्कवीश्वरी गान्धर्ववेदविदां मार्गदर्शिनी रिपूणां प्रज्ञाहारिणी जालिनी फलिनी –''

पूर्णा – ''प्रियं नः प्रियं नः । यत्सखीफलिन्युदयङ्करसङ्घे ।''

विशालाक्षः – ''इतराऽङ्गभूमेरुत्तमा पुत्री । भरतभूमेर्वरेण्या भूषा । अपारभक्तिर्भट्टारके । असदृशशक्तिः क्रियासु । सर्वसङ्गपरित्यागिन्यपि महाकार्यमग्ना । यां देवरक्षितामाहुः ।''

पूर्णा – ''अतीव प्रियं मे । यदुदयङ्करसङ्घे भगवती देवरक्षिता ।''

विशालाक्षः – ''अथ किं श्रोतुमिच्छासि ?''

पूर्णा – ''तात ! पञ्चमी का ?''

विशालोक्षो रणन्धरं पश्यति ।

रणन्धरः – ''शेषा शेषाहिवर्ण्यगुणा पदभ्रष्टस्यापि महोत्कृष्टस्य निरधिकारस्यापि विश्वाधिकस्य पलायितस्यापि परभयवर्धनस्य निर्धनस्यापि प्रभोर्दूरे वसतोऽप्यङ्गराष्ट्रप्रजाचित्तेषु सतः सतामग्रगण्यस्य निरतिशयपुण्यस्य महात्मनः सत्यसेनभट्टारकस्य भगिन्यास्तनया पुरुषाकारपूर्णशया महाशया विगतभया विदितनया वीरा धीरा निस्तुलधामा रामा ।''

पूर्णा – '' तात ! किमहमुदयङ्करसङ्घे सभ्या संवृत्ता ।''

विशालाक्षः – '' तत्र कः सन्देहः ?''

द्वादशं प्रकरणम्

## प्रेमसोदरः

अथ पुनर्विशालाक्ष उभावालोक्याब्रवीत् । "वत्सौ ! सप्ताहमध्ये मया गन्तव्यं किमपि दविष्ठं स्थानमुद्दिश्य । गमनात्पुर्वं मदिष्टमेकं सूचयामि युवयोरग्रे । तद्यदि युवयोरपीष्टं स्यात्तर्हि तत्कार्यं निर्वर्त्यैव गच्छेयमिति मम मतिः ।"

उभौ - (ससम्भ्रमम्) "किं तत् ?"

विशालाक्षः - "युवयोरुभाभ्यां शरीराभ्यामेकेन शरीरेण भवितव्यम् । न केवलं मे । भगिन्याः कमलाक्ष्याश्चायमेवाशयः ।"

रणन्धरो न किञ्चिद्वक्तुमशकत् । स देववाटिकायां विद्याभ्यासकाले बहुषु समयेष्वलभत पूर्णया सह रहस्यसम्भाषणावकाशम् । समभाषत च । बहुषु समयेष्वलभत विविक्ते रात्रिष्वेकशालायां तया सह शेतुमवकाशम् । अशेत च। तथापि न कदाचिदप्यभवद्रागान्धः । न केवलं ब्रह्मचर्याश्रममर्यादया अपि तु स्वभावेन च पश्यति सतामद्यापि भगिनीवत् । न जानाति पितरम् । स तस्य शैशव एव तीर्थयात्रां किल गतो नाद्यापि निवृत्तः । मातुल एव तं विद्याबुद्धिप्रदानेन श्रेष्ठं पुरुषमकार्षीत् । तस्मात्स पश्यति मातुलं पितृनिर्विशेषम् ।

मातुलस्य तत्कालसूचनं तं स्तब्धमकार्षीत् । भगिनीभावं कान्ताभावतया विपरिणमयितुं तस्य मनः शक्तं नाभूत् । तस्य वाणी तु बृहस्पतिसमस्य दूरदर्शिनो देवतासमस्य पूज्यस्य प्रभुसमस्यादेष्टुर्मातृसमस्य प्रीतिमतः पितृसमस्य सर्वभारवाहिनः सर्वविद्याध्यापकस्य गुरोर्मातुलस्य विरुद्धं वक्तुं शक्ता नाभूत् । एतादृशे सन्दर्भे स किङ्करोतु साधुः ?

स एकदा दर्शनीयं पूर्णाया आननमदर्शत् । तत्सम्पूर्णाभिः कलाभिर्विराजमानममृतभानोर्मण्डलमतीत्य शोभते । तन्महता लोकोत्तरेण महसा करोति तत्पार्थिवं गृहं देदीप्यमानं दिव्यं भवनम् । न केवलं तल्लोकोत्तरं तेजस्वि । लोकोत्तरं च कमनीयम् । लोकोत्तरं चाकर्षकम् । लोकोत्तरं चाह्लादकम् । यदि तदेकदा चुम्बनाय मिलेद्देवयुवकश्चात्मानं धन्यं मन्येत ।

"अयि बालिश ! हस्तप्राप्तं सर्वेषां पुण्यानामेकं फलं सर्वेषां काम्यानामुत्तमं काम्यं सर्वेषां रमणीयानां श्रेष्ठं रमणीयं सर्वेषां मधुराणां प्रवरं मधुरं सर्वेषां भोग्यानां वरेण्यं भोग्यं सर्वैः प्रयत्नैः साधनीयं स्त्रीरत्नं न त्यजनीयम्" इति वदन्निव मदनस्तं पश्चादभिद्रवंत्सन्निकृष्टोऽभूत् । तथापि रणन्धरो नाचालीत्।

रणन्धरस्य भावं जानाति पूर्णा । तदानीं तस्य तत्कालदृष्टेश्च भावमज्ञासीत् । अनन्तरं सा कालोचितमालोच्य पितरमालोक्यैवमवादीत् "तात ! आवां क्षणमालोच्यास्य प्रश्नस्योत्तरं व दिष्यावः।"

विशालाक्षः - "एवं चेद्रहस्यं सम्भाषितुमधुनैव गच्छ तां विविक्तां कुटीम् । गुरोराज्ञया पूर्णारणन्धरौ ततश्चलितौ विविक्तां कुटीं प्राविक्षताम् । पूर्णा स्वां सहजां धोरणीमनुसृत्य रणन्धरमवादीत् । "भाव ! आज्ञानोदया-

दद्यापि त्वामहं पश्यामि भ्रातृभावेन । त्वं मां भगिनीभावेन पश्यसीति न पृथग्वक्तव्यम् । त्वमेव हि मे परिशुद्धप्रेमाध्यापको गुरुः । यदि त्वं तमेव शुद्धं प्रेमाणमितः परमपि चालयितुमिच्छसि तन्ममातीव सम्मतम् ।"

रणन्धरः - "प्रिये ! मातुलेयी ! किं तवेमानि वाक्यानि तवान्तरङ्गादेव निर्गतानि ? अस्मिन् मुख्ये समये त्वया न किञ्चिदपि प्रच्छादयितव्यम् ।"

पूर्णा - "नास्ति मे तवाग्रे निजाशयप्रच्छादनाभ्यासः ।"

रणन्धरः - "एवं चेदहं त्वां भगिनीभावेनैव द्रष्टुमिच्छामि नित्यम् ।"

तद्वाक्यं निशम्य पूर्णा रणन्धरस्य तत्पूर्वं गाढमालिङ्गनमकार्षीत् । अवादीच्चैवम् - "भाव! अहमभ्रातृका त्वां परिणीय नाहमीश्वरदत्तं प्रेमसोदरं त्यक्तुमुत्सहे ।"

वाक्यमध्ये पूर्णायाः कण्ठो बाष्पगद्गदोऽभूत् । रणन्धरः पूर्णायास्तद्बाष्पजलं हस्तेनैकेन प्रमार्जयन्नन्येन हस्तेन तस्याः कण्ठमालिङ्ग्यावादीत् - "मातुलेयि ! मम निर्णयः किं त्वामक्षोभयत् ? तवोष्णं बाष्पं नाहं सोढुं क्षमे । बिभेमि पापादपि तव तापात् । व्रतच्युतेरपि तव कष्टात् । नियमभ्रंशादपि तव दुःखात् प्रतिज्ञाहानेरपि तव विषादात् । सत्यलोपादपि तवाशाभङ्गात् । मर्यादातिक्रमणादपि तव नैराश्यसञ्जनितक्षोभात् । गुरोर्मातुलस्य पादौ प्रमाणीकृत्यवदेयम् । तवेष्टमेव ममेष्टम् । तव हर्ष एव मम हर्षः। तवोत्साह एव ममोत्साहः । तव भोग एव मम भोगः । तव शान्तिरेव मम शान्तिः । वद सत्यम् । किं मयि ते प्रतिफलनिरपेक्षः शरदिन्दुकिरणविमलः सोदरप्रेमा ? उताहो युगादि-

मारभ्याद्यापि महाकविभिर्वर्ण्यमानोऽप्यपर्याप्तवर्णनो निरुपमलीलो भगवता लक्ष्मीसुतेन भुवने प्रचारितो बन्धूकप्रसूनारुणः शृङ्गारस्य स्थायीभावः ?"

पूर्णा – "जानास्येव मां ज्ञानोदयात्प्रभृति क्षणिकेषु भोगेषु निःस्पृहाम् । रोगादिवाहं बिभेमि भोगात् । नाहं शाश्वती कन्यैव भवेयमिति प्रतिज्ञातुं शक्ता । तातेन ह्यस्मि परवती । तथाप्येतावद्ब्रवीमि । सर्वविद्या-सब्रह्मचारिणं परिशुद्धशाश्वतप्रेमाणं भगवद्दत्तं भ्रातरमेव नाहं परिणेतुमुत्सहे । आगच्छ मध्यशालाम् । वदामि निश्चयमावयोस्ताताय ।"

रणन्धरः – "सन्तुष्टोऽस्मि प्रिये, भगिनि ! सन्तुष्टोऽस्मि । अत्र तातस्याग्रे सर्वोऽपि भारस्त्वया वोढव्यः ।"

पूर्णा – "भवत्वेवम् ।"

अथ शनैरालिङ्गनबन्धान्मुक्तौ तौ मध्यशालां प्रत्यगमताम् । उपाविक्षतां च यथापूर्वम् । अथ पूर्णा विनीतया वाचा पितरमब्रवीत् – "तात! दीनाऽहं याचे । अभ्रातृकायै मह्यं भ्रातरं देह्येकम् । अयमेव वीराणां धीराणां च नेता मम भवतु भ्रता । अङ्गीकृतवानत्र भावः । तातेनाप्यङ्गीकर्तव्यम् ।"

विशालाक्षः – "मुग्धे ! भ्रातुः कृत्यानि प्रीतिमान् भर्तापि कर्तुं शक्नुयात् ।"

पूर्णा – "किं भर्ता भ्रातृवत्प्रतिफलनिरपेक्षं परिशुद्धं प्रेमाणं दर्शयितुं क्षमते ?"

विशालाक्षो न किञ्चिदुक्तवान् ।

## त्रयोदशं प्रकरणम्

# भावाङ्कुरारोपणम्

पूर्णा – "तात ! यन्मे प्रार्थनं तत्र तातस्य किं प्रत्युत्तरम् ?"

विशालाक्षः – "वत्से ! त्वं न जानासि गुणवतो भ्रातुः प्रेम्णोऽपि गुणवत्याः पत्युः प्रेमैवाधिकः प्रकृत्येति । एवमपि न त्वया सहात्र वादं कर्तुमुत्सहे । स्वयमेव प्रभवति स्वस्य शरीरस्य प्रौढा हि कन्या।"

अकम्पिष्ट पूर्णा पितुस्तटस्थस्येव वचसा । सा न सोढुं प्रभवेत्पितुरल्पामप्यसन्तृप्तिम् । अथैवमाह – "मैवं वादीत्तातः । मम विषये तातस्याधिकारोऽन्यादृशः । इदं मे शरीरं यस्मै कस्मैचिदन्ततः शात्रवायापि दातुं प्रभवेत्तातः यन्मे प्रार्थनं तन्निजाभिप्रायनिवेदनमात्रम् । तातस्यैवान्ततो निर्णयाधिकारः ।"

विशालाक्षः – "एवं चेच्छृणु वत्से ! – " इत्यर्धोक्ते पूर्णारणन्धरौ भीतौ कम्पेते । कीदृश्याज्ञा निर्गच्छेद्गुरोर्मुखादिति ।

विशालाक्षो वाक्यं पूरयति – "मया सूचितेषु मम दृष्ट्या तवानुरूपेषु चतुर्षु कञ्चिदात्मनोऽभिमतं वृणीष्व वरम् ।"

रणन्धरस्य मुखं विकसति ।

विशालाक्षः – "एकस्ते बाल्यात्प्रभृति परिचितः सकलगुणालङ्कृतः सर्वश्लाध्यचरित्रः कमलाक्ष्याः पुत्रः सर्वोत्तमधनुर्धरो रणन्धरः । अन्य उदयङ्करसङ्घनायकः शात्रवभयदायकः कुलाद्रिधीरः सर्वंसहैकवीरो गजवीरः । इतरो नगरपालः सर्वार्यमर्यादापालः सतां त्राता शस्त्रभृतां नेता सर्वस्तुत्यकर्मा विष्णुशर्मा । शेषो दोषापेतस्वभावः शत्रूणां दावः प्रज्ञानिधिगुणजलधिर्महारथः सत्यरथः ।"

रणन्धरः – "आश्चर्यम् । यन्मातुलः शात्रवावपि वरत्वेन सूचयति ।"

विशालाक्षः – "तयोरन्यतरं चेत्पूर्णा वृणुयादुदयङ्करसङ्घस्य कार्यं बहुकृतं स्यात् । सम्राजो लक्षाधिकात्सैन्यादपि तौ भयदावस्माकं सङ्घाय। अहं जाने यः परिणेष्यति पूर्णां सोऽचिरात्प्रद्योतनपक्षाद्दूरीकर्तुं शक्य इति । अस्ति भूयसी तादृश प्रचारानुकूलसामग्री । अस्ति च विषयं नैपुण्येन पुरो निक्षेप्तुं शक्तिः पूर्णायाः । अस्ति चानन्यादृश्याकर्षणशक्तिः । सम्बन्धश्च यदि सन्निकृष्टो भवेत् अथ किमु वक्तव्यं । तौ ह्यर्थादपि धर्ममेवाधिकं मानयतः ।"

रणन्धरः – "सत्यम् ।" इति शिरः कम्पयति ।

पूर्णा – "तात ! किमात्मीयस्य तर्पणं तातस्येष्टम् ? उताहो शत्रोर्वशीकरणम् ?"

विशालाक्षः – "आत्मीयस्य तर्पणं विशालाक्षस्येष्टम् । शत्रोर्वशीकरणम् उदयङ्करसङ्घमन्त्रिणः ।"

रणन्धरः - (हसन्) "मातुलेय्याः किमिष्टम् ?"

पूर्णा - "नित्यकन्यात्वं पूर्णाया इष्टम् । आत्मीयस्य तर्पणं वैशालाक्ष्याः । शत्रोर्वशीकरणमुदयङ्करसङ्घसभ्यायाः ।"

विशालाक्षः - (सदृढस्वरम्) "किं नित्यकन्यात्वम् ? तत्कदापि न ममेष्टं त्वदेकापत्यस्य ।"

दृढस्वरं पितुरेतद्वचनमाकर्ण्य यत्किञ्चित्परिशिष्टश्च पूर्णायाः सन्ततब्रह्मचर्योद्देशः शिथिल इवाभूत् । अथ विनयेन पितरमालोक्याह - "तात ! उदयङ्करसङ्घकार्यस्यार्थे यः कश्चिदपि त्यागो मया कर्तुं शक्यः । उपरि गुरोराज्ञा । अथ किमु वक्तव्यम् ? यथा सङ्घस्य कार्यं कृतं भवेत्तथा भवतु मम कन्यात्वस्य समाप्तिः । तस्माद्विष्णुशर्मसत्यरथयोरन्यतरस्तातस्येष्टो मया व्रियते । अत्रैकं याचे । स यदि प्रत्याख्यास्यति मम भवतु नित्यकन्यात्वावकाशः ।"

विशालाक्षः - "त्वमेव वृणुष्व तयोरन्यतरम् । अहं प्रयतिष्ये सङ्घटनाय । तत्राहं यदि विफलो भवेयं भव त्वं नित्याब्रह्मचारिणी ।"

पूर्णा -"तातस्याज्ञया सङ्घस्य कार्यार्थं च मया गार्हस्थ्यमङ्गीकृतम् । न सुखाभिलाषात् । तस्मात्तात एवाज्ञापयतु समालोच्य यथोदयङ्करसङ्घस्याधिको लाभो भवेत् ।"

रणन्धरः - "युक्तमाह पूर्णा ।"

विशालाक्षः - (क्षणचतुष्टयमालोच्य) "वत्से ! शत्रूणामपि श्लाघ्येन गुणवता राक्षसानामपि भयजनकेन वीर्यवता योगिनीनामपि सम्मोहनेन रूपवता वेदरहस्यानामपि भेदकेन बुद्धिमता दुष्करकार्याणामपि साधकेन यत्नवता भूतानामपि भयङ्करेण साहसवता प्रमादावमान-पराजयानामनभिज्ञेन भाग्यवता व्यर्थपरुषासम्बद्धानां वचसामनु-च्चारकेण नीतिमता ब्राह्मणजातेरेव भाग्यफलेनानुभाववता दैववशात् प्रद्योतनपक्षधरेण परन्तपोदयङ्करसङ्गनिद्राहरेण विचित्रकर्मणा विष्णु-शर्मणा सह त्वां सङ्घटयितुं प्रयते । अत्र त्वयामे किमपि साहाय्यकं कर्तव्यम् । न क्रियया । न वाचा । भावेन भव त्वं मम प्रयत्नस्यानुकूला । तावदप्यलम् ।"

विशालाक्षेण कृतं विष्णुशर्मणो वर्णनमाकर्ण्यानसूयो रणन्धरः - "नास्ति पूज्यपादेन कृते विष्णुशर्मणो वर्णने लेशतोऽप्यतिशयोक्तिः ।" इत्यवादीत् ।

विना सम्भाषणं विनापि समवलोकनं विनैव पर्यालोचनं गुरोरादेशात्पूर्णा विष्णुशर्मणि कमपि भावमबध्नात् । यस्यां मदनस्य धनुर्ज्याटङ्कारो बहुशो विफलोऽभवत् तां गुरोरादेशः संसाराभिमुखीमकार्षीत् ।

अथाह लज्जमानेव सा । "तथा भवतु यथाऽऽज्ञापयति तातः ।

विशालाक्षः - "यते । अचिराद्भविष्यति मे यत्नः सफलः अदृष्टवान्भवशर्मा। यद्विदितानेकशास्त्रार्था विदुषीविहितानेकशस्त्र-परिश्रमाः वीरा विजितामरमहिलासुन्दरी निगृहीतेन्द्रिया धीरा निभालित-लोकयात्रा प्राज्ञानियन्त्रितारिषाड्वर्गा सत्यवती वीतदोषा पुण्यवती

धूतमोहा ज्ञानिनी जातशक्तिर्योगिनी महात्मनः सत्यसेनभट्टारकस्य भागिनेयी विश्वस्यादरपात्रं भूलोकस्य रत्नं मम सर्वस्वं सत्कथाप्रवणकर्णा शरच्चन्द्रवर्णा पूर्णा प्रवेक्ष्यत्यचिरात्तस्य गृहम् ।"

रणन्धरः - "सत्यम्" ।

उत्थितो विशालाक्षः । तमनूत्थितौ पूर्णारणन्धरौ । स उभावपि प्रत्येकं परिरभ्य कार्यान्तरायानिष्क्रान्तः ।

चतुर्दशं प्रकरणम्

## अर्पणात्समयो भिन्नः

गतो दिवसः । वारुण्या आशाया अन्तःपुरमधुनैव विसृष्टवान्भगवानर्कः । इने स्वगृहं विसृज्य गते वारुण्या अपि वेश्यायाया इव गलितो रागः । बहुलनक्षत्रकुसुमालङ्कृतमूर्धजा निशादेवी प्रत्युद्यातीव गृहाङ्गणगतं नायकं चन्द्रमसम् । वान्ति शीतलाः पवमानाः ।

तदा गिरिव्रजावासिन्या अपराजितायाः परिव्राजिकाया आश्रमावरणे पश्चिमभागस्थे सुन्दरोद्याने कदम्बवृक्षस्याधः कृतकवेदिकायां काचन कमललोचना कमपि प्रतीक्षमाणा समुपाविक्षत् । इयं नामतो रूपतश्च चन्द्रप्रभा । चन्द्रप्रभायाश्च गात्रप्रभानुरूपाणि गात्रलक्षणानि गात्रलक्षणानुरूपं गात्रसौकुमार्यम् । सर्वानुरूपे विशाले लोचने। कालाभ्रनीलाम्बरधारिणी सिन्दूरारुणकञ्चुका फुल्लमल्लिका कुसुमधवलाङ्गी सा त्रिवर्णा जगन्मोहिनी प्रकृतिरिव भासते । इयं भवशर्मणो भारद्वाजस्य तनया । काश्यपी पूर्णा शाणोल्लीढं रत्नम् भारद्वाजी चन्द्रप्रभा कालप्रफुल्लं कुसुमम् । इदमनयोः सङ्ग्रहतः सौन्दर्यतारतम्यम् ।

चन्द्रप्रभा गृहस्थाश्रमाभिलाषिण्यपि कामस्यावशंवदा । अभिमानवत्यपि रोषस्यानायत्ता। असाधारणरूपविज्ञानापि गर्वस्यानधीना । विनीतापि सुतरां स्वतन्त्रा । नित्यालोचनापि प्रसन्नमुखी । स्वार्थमत्यजन्त्यपि परार्थसाधने सोत्साहा । काकिणोमात्रव्यये कारणानिविचारयन्त्यपि

काले सहस्रसुवर्णव्ययेपि निःसङ्गतया सिद्धा । मृदुभाषिण्यपि समये साधिकारभाषा । गृहधर्मेषु पुरुषाधिक्यमसहमाना ललना । विवाहेषु स्त्रीपुरुषाधिकारभेदमनङ्गीकुर्वाणा वामाङ्गी। आचारेषु गतानुगतिकत्वं विद्विषन्ती योषा ।

प्रकरणरङ्गस्थलस्वामिनीमपराजितामधिकृत्य किञ्चिद्वदामः । सा कीर्तिशेषस्य वाधूलवेदबन्धोः पत्नी । अनपत्यस्याभ्रातृकस्य च पत्युरनन्तरं तस्य भूयिष्ठं स्वमलभत । भवनं च सावरणं सोद्यानं विशालम् । ततो वैराग्येण सा बभूव जटाधारिणी तापसी । गृहं स्वं तस्या अभूदाश्रमः । वर्तते सा निजेनैव धनेन । न वन्यैर्मूलफलैर्भिक्षाटनेन वा । तथापि घोरे तपसि किलात्येति वनवासिनस्तापसान् । तस्यां कीर्तिशेषस्य सब्रह्मचारिणः पत्न्यां तापस्यां भवशर्मणो ज्येष्ठभगिन्यामिवास्ति महद्गौरवम् । तस्याश्च भवशर्मणि भ्रातरीवास्ति भूयान्प्रेमा । तस्या आर्थिकव्यवहाराणां भवशर्मैव प्रायः प्रेक्षकः । अस्ति राजपुत्रस्य विश्वसारस्यामितं गौरवं तस्याम् ।

अपराजिता प्रायतत चन्द्रप्रभां विश्वसाराय सङ्घटयितुम् । आसीत्तत्र भवशर्मणः सम्पूर्णा सम्मतिः । बहुकृत्वश्चन्द्रप्रभाविश्वसारौ सम्भाषितुं समाविष्टावपराजिताश्रमे । एकैकस्मिन्नपि सम्भाषणे चन्द्रप्रभैकायत्त आत्मनः प्रेमा विश्वसारेण प्रकटितः । वरस्य विक्रमाभिजात्यसम्पत्ती समीक्ष्य पितुः सम्मतिमुद्वीक्ष्यान्ततो वरस्यात्मैकायत्तप्रेमप्रतिश्रुतीर्दृढं विश्वस्य चन्द्रप्रभा च पाणिं दातुं कथञ्चिदन्वमन्यत । तथापि पाणिग्रहणात्प्रागात्मानं शुद्धां कन्यामेव मन्यमाना रागचपलस्य राजकुमारस्य चुम्बनाद्युपचारेभ्यो जातुचिदपि नावकाशं प्रायच्छत् । एवं स्थिते सार्वभौमस्येच्छावायुरवादन्यथा । यदि राजकुमारः स्वयं

मातृद्वारा च चन्द्रप्रभामेव परिणेतुं दृढं प्रयत्नमकरिष्यत्तदाऽभविष्यत् कार्यम् । उपस्थितां महासुन्दरीं राजसेनां त्यक्तुं चपलः स राजकुमारो न प्राभवत् । "हस्तप्राप्तैव चन्द्रप्रभा । राजसेनापरिणयादनन्तरमपि वोढुं शक्येयम्" इति भ्रान्तिस्तं समयविरोधेनामार्गाय न्यवर्तयत् । अथ राजसेना विश्वसारयोर्विवाहः संवृत्तः । खिन्नासीदपराजिता । ततोऽपि भवशर्मा । चन्द्रप्रभा तु रुष्टा राजकुमारसम्बन्धेच्छां दूरतो निष्कास्यान्ततः शान्तचित्ताऽभवत् ।

गतरात्रौ विषयमेतमधिकृत्यापराजिता भवशर्माणौ बहुसमभाषेताम् । सुमित्रोक्तनूतनवरोपस्थितिरेव तत्र पाठकेभ्यो न पृथग्वक्तव्यम् । "अविलम्बेन विश्वसारश्चन्द्रप्रभां च यदि परिणेतुं प्रभवेत्तर्हि वीरमित्रः प्रत्याख्यातव्यः । नचेद्वीरमित्राय कन्या दातव्या " इति मतमपराजितायाः । अन्ततस्तदन्वमोदत भवशर्मा । तथापि कार्यनिर्वर्तने चन्द्रप्रभायाः सम्मतिरेव मुख्येति स्पष्टमवदत् । प्रातर्विदितार्थो विश्वसारश्चन्द्रप्रभाम् अविलम्बेन परिणेतुमङ्गीकृतवानपराजितायाः पुरः । चन्द्रप्रभायाः सम्मतिः परिशिष्टा । तां सम्पादयितुं भवशर्मा नाशक् । अपराजिता च न प्राभूत् । तत्र प्रत्याख्याने हेतुं प्रबलं मानं वचनोपचारैर्दूरीकर्तुं स्वयं राजकुमार एव प्रभवेदिति मन्वानावपराजिताभवशर्माणौ तस्मिन्निशामुखे तत्राश्रमोद्याने तयोः सम्भाषितुमवकाशमचीक्लृपताम् । समागता पितुरादेशेन स्थलं तच्चन्द्रप्रभा । समागमिष्यदपराजिताया आदेशेन विश्वसारः ।

प्रकृतमनुसरामः । प्रतीक्षते स्पष्टं प्रत्याख्यातुमेव चन्द्रप्रभा । तस्या एतानि चैत्तानि वचनानि - "धिक्पुरुषजातेरस्थिरानुरागत्वम् । तथा तथा प्रीतिपेशलैर्वचनैर्दृढाभिः प्रतिज्ञाभिश्च स मामनुमान्यान्ततः परां

परिणीतवान् । नाहं सम्प्रत्यङ्गराजदुहितुः सपत्नी भूत्वा तस्याः कष्टं वर्धयितुमुत्सहे । यथा योषितो युगपद्द्वौ भर्तारावयुक्तौ । तथैव पुंसश्च द्वे भार्ये अयुक्ते । अधिवेदनं तु पुंसां निरङ्कुशत्वविलसितम् । परस्यै कष्टप्रदानेन सह मम संसारो माभूत्समारब्धः ।"

एवं चिन्तयन्त्यां चन्द्रप्रभायां समागतो राजकुमारः । तं वीरजन-गोष्ठीवर्ण्यविक्रमं चक्षुष्मतीनां शारदं चन्द्रं सार्वभौमकुमारमवलोक्य चन्द्रप्रभोदस्थात् । तिष्ठत्येव सकिरीटधारिणः पुत्रः। तयोस्तिष्ठतोरेव मन्दस्वरममन्दार्थं सम्भाषणमेवमभूत् ।

विश्वसारः - "मम प्रिये ! भारद्वाजि ! सार्वभौमस्त्वनिष्टामेव मे कण्ठे काञ्चिदबध्नात् मया च सार्वभौमभयादेव परिणीता राजसेना । त्वमेव मे शाश्वती मनोहारिणी ।"

चन्द्रप्रभा - "ततस्ततः ।"

विश्वसारः - "मासद्वयमध्ये केनचिदुपायेन पितरमनुमान्य परिणेष्यामि त्वाम् । सत्यमिदम् ।"

चन्द्रप्रभा - "किं वक्तव्यं सर्वमुक्तं भर्तृदारकेण ?"

विश्वसारः - "पारतन्त्र्येणायुक्तमाचरितवतो मे वाणी यत्किञ्चिदपि वक्तुं लज्जते । एतावदुच्यते तथापि । त्वदेकायत्तहृदयस्यापि परवत्त्वात्परां परिणीतवतो ममेमं क्षमस्वापराधम् ।"

चन्द्रप्रभा - "यद्यहं भर्तृदारकस्याभविष्यं पत्नी तर्हि तमिममपराधम् अक्षमिष्ये । अधुना नास्ति मे तादृशोऽधिकारः । यत्समयभङ्गः कृतो भर्तृदारकेण तत्र न निन्दामि भर्तृदारकम् । पितुरतिक्रमणात्समयभङ्गो हि वरम् ।"

विश्वसारः - "न मया समयभङ्गः कर्तुमुद्दिष्टः कालत्रयेपि - "

मध्ये प्रविश्य चन्द्रप्रभा -"न तूद्दिष्टः । परंतु परवत्त्वात्कृतः ।"

विश्वसारः - "अद्यापि मया नोच्यते त्वामहं न परिणेष्यामीति । याच्यते चानुतापदग्धेनापि दीप्तेन स्वरेण ते पाणिः ।"

चन्द्रप्रभा -"किं कृतदारस्य भूयो विवाहः ? किमीदृशः समय आवयोः ? स्पष्टं मया बहुकृत्वः कथितं भर्तृदारकस्य पुरः । "बहुकान्ताकामिनो राजकुमराः । न मया सपत्नां मध्ये वर्तितुं शक्यम् । अतो मयि रागं त्यजतु भर्तृदारकः" इति । तदा भर्तृदारकेण यत्प्रतिज्ञातं तदद्यापि स्मरामि । भर्तृदारक ! विधिना परिणीतां तामेव निर्व्याजेन प्रेम्णा पश्यतु भर्तृदारकः । प्राञ्जलिरहं याचे - पादयोः पतित्वा याचे । इतःपरं मयि भगिनीभावं बध्नातु भर्तृदारकः ।"

विश्वसारः - "मानिनि ! नाहं शक्ष्यामि । त्वां विना जीवितयात्रामेव निवर्तयितुम् । एवं मदनज्वरे मज्जन्वो भावी चक्रवर्ती न समुपेक्ष्यस्त्वया ।"

चन्द्रप्रभा - (आत्मगतम्) "हन्त !! अनेन भ्राताविशखो मृत एव गण्यते । यदात्मानं भाविनं चक्रवर्तिनं प्रकटतया वदति । तदिदं मम

भङ्ग्यन्तरेण भावि महाराज्ञीपदस्मारणे किमपि प्रलोभनम् ।" (प्रकाशम्) "भर्तृदारकस्य मदनज्वरशान्तये क्षममौषधमस्त्यन्यत् । इदं दीनप्रजायाः पूरयतु धर्म्यं प्रार्थनं भावीनश्चक्रवर्ती ।"

विश्वसारः - "अनभिज्ञे ! सकृदेव वितरन्ति हृदयं कुलकन्याः । स धर्मः कन्यानाम् ।"

चन्द्रप्रभा - "भर्तृदारक ! पाणेः प्राङ् न वितरेयुर्हृदयं धीराः कुलकन्याः । यन्मया प्राग्दत्तं तद्ब्रह्मचारिणे मदेकायत्तचित्तत्वेन नटते भर्तृदारकाय निजपाणिग्रहणाभ्यनुज्ञानमात्रम् । अर्पणात्समयो भिन्नः । यद्रागवशंवदा कन्या वराय मनः समर्पयति तदर्पणम् । परस्परं प्रतिज्ञानं समयः आवयो समयं भर्तृदारक एव वितथं कृतवान् । चन्द्रप्रभया तु कृतोद्वाहाय पाणिर्दातुमशक्यः । स्पष्टीकृतं च तत् प्रागेव चन्द्रप्रभया ।"

विश्वसारः - "मानिनि ! न जानासि शास्त्रतः पुरुषस्य बहुकलत्रत्वमनिन्द्यम् ।"

चन्द्रप्रभा - "नाहं निन्दामि पुंसो बहुकलत्रत्वम् । एतावदेव मयोच्यते कलत्रवते पुंसे नाहं पाणिं दातुं प्रभवेयमिति । न जानन्ति पुमांसो भवन्तः । योषितां सपत्निकष्टं कीदृशमिति । अहमिव राजसेनाकुमारी काचिद्योषित् । तस्यै स्वजातीयायै नाहं कष्टं दातुमुत्सहे । तस्याः पतिं नाहमपहर्तुमुत्सहे । अस्तु पुस्तकात्मकं धर्मशास्तां पुंसामनुकूलम् । प्रकृत्या मानवहृदये लिखितं धर्मशास्त्रम् त्वन्यत् । तन्मे कथयति । मा दाः परस्यै कष्टं सपत्नी भूत्वेति । स्वार्थदृष्टिश्च मामीदृशात्सम्बन्धा-न्निवर्तयति । बहुकलत्रस्य भार्या भूत्वा योषिन्न सुखं ह्यनुभवेत् ।"

एवं वदन्त्या एव प्रमदोद्यानपवनचलालकभ्रमरचुम्बितं चन्द्रप्रभायाः कमनीयं मुखपुण्डरीकं विलोकयतो राजकुमारस्य मनसि मर्यादा-सेतुमतिक्रान्तो रागतरङ्ग उत्थितः । स युवा युवतेस्तस्या अत्यन्तं सन्निकृष्टोऽभूत् । रागवेगेन तस्य हस्तौ युवतेरुपरि चलितौ । तदा निषेधमुद्रया सहोत्थितः किसलयकोमलोऽपि चन्द्रप्रभायाः पाणिर्लोहकवाट इव तं वेगमरौत्सीत् । राजकुमारेण भूयः स एव शब्दः श्रुतः - "चन्द्रप्रभया तु कृतोद्वाहाय पाणिर्दातुमशक्यः " इति ।

राजकुमारः पुनरुक्तवान् - "कन्या दत्तं हृदयं न प्रतिनिवर्तयितुमर्हति" इति ।

चन्द्रप्रभा पुनरपि स्पष्टमवादीत् - "न मया दत्तं हृदयम् । समय एव सः । अर्पणात्समयो भिन्नः । स च समयो भर्तृदारकेणैव वितथः कृतः" इति ।

पञ्चदशं प्रकरणम्

## चपलमनोगतयः

तथा वदन्त्येव चन्द्रप्रभा मदनोन्मत्तात्तस्मादात्मानं रक्षितुकामा ततस्त्वरितमपयाता । तदेव रङ्गस्थलम् । स एव कुसुमामोदः । तदेव प्रसन्नं गगनम् । सैव मनसाह्लादिनी नाभसचन्द्रप्रभा । पार्थिवचन्द्रप्रभायां निर्गतायां सर्वमेतद्विश्वसारस्यासह्यमिवाभूत् ।

स तत्रैवेतस्ततः सञ्चरन्नेवं मनसा प्रालपीत् - "अस्मि सार्वभौमस्य पुत्रः । अस्मि पृथिव्यामुत्तमो रूपवान् । अस्मि गज इव बलवान् । अस्मि प्रौढयौवनः । अस्मि सुतरां रसिकः । किं प्रयोजनम् ? अनुरूपा नायिका न लभ्यते ।

"ब्रह्ममठीया पण्डितवरकर्मणः पुत्री भ्रामरी यद्यपि विदुषी कवीश्वरी गानविद्याकुशला च भवति । तथापि न सुन्दरी । न वा वयोऽनुरूपविभ्रमा । वन्या किरातीव सुतरामविलासा । योषितोऽपि तस्या अङ्गानि दारुपरुषाणि भवन्ति ।

रमणीयानि सुकुमाराणि च गात्राणि राजसेनायाः । अद्भुतैव कमलदलपाटला कान्तिः । तथाप्यद्याप्यमुञ्चतो बन्धुनाशदुःखान्मुखे नास्ति लेशतोऽपि प्रसादः । कुत एव धवलं स्मितम् ?

अथ या सा रतिरिव रमणीया रम्भेव निरुपमा रूपानुरूपवैदग्ध्या प्रौढापि चेष्टासु मुग्धा सरलापि केशेषु कुटिला प्रतिसम्भाषणममृतं वर्षन्ती प्रतिमन्दहसितं मदनस्य यशसेव दिशः पूरयन्ती प्रतिप्रणयलीलं नवं नवं रसमुत्पादयन्ती प्रतिसमावेशं स्वर्गमिव प्रदर्शयन्ती निन्दन्त्यपि रागमिवोद्गिरन्ती भर्त्सयन्त्यपि चेतो हरन्ती यावद्दृष्टिपातं प्रदेशं शृङ्गारमयमिवादधाना प्रतिदर्शनमुत्तरोत्तराधिकमानन्दं विदधाना मदनस्य राज्यतन्त्रमिव दधाना सर्वेन्द्रियानन्दिनी नन्दिकेश्वरीये कामागमे पण्डिता सहजविलासमण्डिता वनितामणिः सा दुरदृष्टवशाद्विधवा । तां चेत्स्वीकुर्यां दिधिषुर्गण्येयपदमेतदयशस्यं मगधसाम्राज्यसिंहासनम् अधिष्ठास्यतो मे । अथवा तदपि सहेयं यदि सार्वभौमोऽङ्गीकुर्यात् । स एव दुर्लभोऽङ्गीकारः ।

विलासवती यद्यपि सुन्दरी सरसा च भवति । तथापि तस्या अनुन्नतो भावः । अनुदारा प्रकृतिः गणिकाया इव प्रतिफलापेक्षी प्रेमा ।

चन्द्रप्रभा तु रामणीयकस्य शाला । लावण्यस्य भूमिः । लक्षणानामेका वसतिः । गुणानां विपणिः । क्रोधेऽपि प्रसन्नाकृतिः। विषादेपि दर्शनीयरूपा । पुंसामेव बहुकलत्रत्वमनिन्द्यम् । तत्रापि राज्ञां विशेषतः । तत्पातकपक्षे स्थापयन्ती । प्रत्याचष्टे हस्तप्राप्तं चक्रवर्तिपुत्रमिति तस्याश्चित्रो मानविकारः । तथापि प्रयतिष्ये तस्यास्तं विकारं हर्तुम् ।

मधुमती तु लक्षणवतीनं प्रतिमानम् । लावण्यवतीनां निदर्शनम् । विदुषीणामुपमानम् । मधुरवाणीनां दृष्टान्तं दृष्टान्तः। किरीटधारिणः पुत्री । सा मयि वचनैरुपचारैश्चेष्टाभिश्च तादृशं प्रेमाणमसकृत्प्रदर्श्य मातुलभयेन लज्जया वा मम प्रत्याख्यातवती प्रेमपत्रम् । अमूल्यस्तस्याः

पाणिः । सा चेन्मम सहधर्मचारिणी भवेद्भरतखण्डस्यैवाहं सार्वभौमः स्याम् अपुत्रसन्ततिर्हि मम मातुलो दक्षिणापथस्य सम्राट् । भूयश्च प्रयतिष्ये । न विसृजेयम् ।"

इति चिन्तयन्नेव राजकुमारो न क्वचिदपि निर्वृतिं लब्धवान् । असुन्दरीति भ्रामर्याम् । नित्यदुःखितेति राजसेनायाम् । पुनर्भूरिति गुप्तकामुक्याम् । अनुन्नतभावेति विलासवत्याम् । वेलातिगमानविकारेति चन्द्रप्रभायाम् । फलकाले कुण्ठितेति मधुमत्याम् ।

## षोडशं प्रकरणम्

# चेटिकयोः सम्भाषणम्

अन्यद्रङ्गस्थलं गच्छामः । तस्मिन्नेव निशामुखे राजान्तःपुरे राजसेनाहर्म्ये गन्धमाल्यशालायां मालाग्रथनव्यापृते द्वे चेटिके समुपविष्टे । तयोरेका नन्दा नाम गोपालकन्या । यद्यपि सा वर्णतः कृष्णा नातिसुरूपा च वदति तथापि प्रसन्नदर्शनीयहासभासुरमुखी । यद्यपि सा केवलम् अक्षरमात्राभिज्ञा तथापि निशितप्रज्ञा । अन्या भद्रा नाम करणकन्या । इयं दूर्वाश्यामाङ्गी । नवयौवनानुगृहीताकर्षकरूपा । अक्षरज्ञा कथाकुशला च । मदवती मदनवती च । अदुष्टाहारिचेष्टा च ।

अचालीत्तयोः सम्भाषणम् ।

नन्दा - "सखि ! गतरात्रौ वीरसिंहो जाम्बुकिः किल वनदुर्गादर्शनाय जगाम नगरोपान्तवनम् । तत्र तं बलवत्प्रजहार किल क्रूरः कश्चन चोरः ।"

भद्रा - (मन्दस्वरेण) "वीरसिंहं चेत्प्रजहार कश्चित् स लोकस्योपकर्ता वक्तव्यो न क्रूरश्चोरः ।

नन्दा - "स ईश्वरभक्तः सदाचार इति च वदन्ति । सखी त्वन्यथा वदतीति चित्रम् ।"

भद्रा – "पेटिकायां गूढानि रहस्यान्युद्घाटयितुं का शक्तिर्लोकस्य? स च सहस्रपतिर्बकजम्बुकव्याघ्राणां सारैर्निर्मितः। बक इव ध्याता । न परस्य ज्योतिषः । अपितु परग्रसनोपायस्य । जम्बुक इव प्रतारकः । न केवलं शत्रूणाम् । मित्राणां च । व्याघ्र इव हिंस्रः । न केवलं प्रयोजनमुद्दिश्य । प्रकृत्यापि ।"

नन्दा – "तादृशं कथं सार्वभौमः समुन्नतेऽधिकारे स्थापितवान् ?"

भद्रा – "अस्य पिता जम्बुकः किल सार्वभौमस्य परमं मित्रम् । अथवा निरङ्कुशाः प्रभूणामनुग्रहाः । कं गुणमभिलक्ष्य राक्षसं परमेश्वरः कोणेशत्वे नियुक्तवान् ?"

नन्दा – "अद्य मन्दायमाने रवौ भर्तृदारकश्च तं वीक्षितुमगात् ।"

भद्रा – " नास्ति न तत्र नकारणम् ।"

नन्दा – "किमहं श्रोतुमर्हामि ?"

भद्रा – "नास्ति तवाग्रे मम किमपि प्रच्छादनीयम् । वीरसिंहोऽस्माकं भर्तृदारकस्य स्यालः । वीरसिंहस्यानुजा विलासवती राजसेना देव्याः सपत्नीगुप्ताः ।"

नन्दा – " आश्चर्याणि शृणोमि । श्रीकृष्णस्येवास्माकं भर्तृदारकस्य चित्राश्चर्याः । सखि ! अप्रमत्तया त्वया भवितव्यम् । मम त्वसौन्दर्यमहा-

कवचेन गुप्तायाः किमपि नास्ति भयम् ।"

भद्रा – "सखि ! यदि मिलेत्सार्वभौमकुमारकान्तापदं किं ते तिक्तम् ? अलाभवैराग्यवचनानि विसृज ममाग्रे ।"

नन्दा – "न केवलं तिक्तं कटु च । सखि ! सार्वभौमकुमारोऽस्तु साक्षादिन्द्रकुमारो वा । बहुकलत्रस्य कान्ता त्वतो नास्ति दौर्भाग्यं नार्याः ।"

भद्रा – "एवं चेत्सत्यभामापि दौर्भाग्यवती वक्तव्या । कति न सन्त्यनेकाः पत्न्यो भर्तॄणाम् । लीयन्ते कालगर्भे । अन्ततो नामापि न शिष्यते तासाम् । सार्वभौमकुमाराः साधारणवन्न गणयितव्याः । सखि ! येन कवचेन गुप्तायास्ते नास्ति भयम् । तदेव कवचं बह्वीनां प्रतिबध्नात्यदृष्टम् । अथवाऽस्माकं भर्तृदारकस्य सौन्दर्यं न तावन्मुख्यम् । ब्रह्ममठीया भ्रामरी किं सुन्दरी ? साऽप्यनुगृहीता भर्तृदारकेण ।"

नन्दा – "किं भ्रामरी ? सखि ! न विश्वसिमि सा सुतरामुत्तमा कन्या । विवाहं विना गुप्तं सम्बन्धं नाङ्गीकुर्यात् ।"

भद्रा – "गुप्तः सम्बन्धोऽप्येको विवाह इति शास्त्रं विद्यते । यद् भर्तृदारको ब्रह्ममठं बहुकृत्वो गुप्तं गच्छन्दृश्यते । यच्च भ्रामर्याः सोदरं सुकर्माणं साधारणशस्त्रविद्याभिज्ञमपि निजेऽङ्गसैन्ये सहस्रपतित्वेनाधिकृतवान् । तदुभयमत्रानुमापकम् । तस्माद्विद्धि । न ते कवचं तावद्दृढमिति । अपि च मा भूस्त्वं महासुन्दरी तथापि सुन्दरीवर्ग एव गणनीया । यथा मे चक्षुः कथयति । यत्प्रशंससि त्वं मां सुन्दरीम्; तत्र ते चक्षुषः पक्षपात एव हेतुः ।"

नन्दा - " भयङ्करं रहस्यमेतत् । यद् भ्रामरी गान्धर्वमङ्गीकृतवती । सखि ! मां तु मा शङ्किष्ठाः । न मया सख्योक्तं पदं कदाचिदपि काङ्क्ष्येत । भर्तृदारकश्च मां वशीकर्तुं कदाचिदपि न प्रायतिष्ट ।"

भद्रा - "एवं चेत् ह्यस्त्वया सह भर्तृदारको यद्दीर्घं भाषणं कृतवान् तस्य को भावः ?"

नन्दा - "किं ते सन्ति सहस्रं नयनानि ?"

भद्रा - "एकमेवालं सर्वं द्रष्टुम् । अन्यदस्त्यधिकम् ।"

नन्दा - "न मां वशीकर्तुं तस्य तत्सम्भाषणम् । अपि त्वन्यां कन्यां मद्द्वारा ।"

भद्रा - "स किं दूतिकामवृणोत्त्वाम् ?"

नन्दा - "अकरवं निकृष्टं कर्म धनाशया। आशा भग्ना । अपराधस्तु शेषः ।"

भद्रा - "किमसि मुखमुभयोः । उताहो पत्रवाहिनी ?"

नन्दा - "उभयं चाभवम् ।"

भद्रा - "का सा धीरा ? या मगधसाम्राज्यसिंहासनोत्तराधिकारिणमपि प्रत्याख्यातवती ।"

नन्दा – "आन्ध्रचक्रवर्तिनः पुत्री कुमारी मधुमती ।"

भद्रा – "अन्यत्पृच्छामि । किं त्वया विलोकितौ तौ लेखौ ? यं भर्तृदारकः प्राहिणोन्मधुमत्यै यं च भर्तृदारकाय मधुमती ।"

नन्दा – "विलोकितौ। विवाहार्थमयाचत भार्तृदारकः । प्रत्याचष्ट मधुमती ।"

भद्रा – "तदनुक्तमपि विदितम् । विवाहसूचनं विना केन वा मधुमत्यै प्रेषयितुं शक्येत रागलेखः ? किं त्वया तयोर्लेखयोः प्रतिकृती सङ्गृहीते ?"

नन्दा – "सङ्गृहीते । आनीतवत्यस्मि च तुभ्यं दर्शयितुम् ।"

अथ नन्दा तत्पत्रद्वयं भद्रायै समर्पितवती । भद्रा तत्प्रत्रद्वयं पठितुं यावद्दीपसमीपमगात्तावदकस्मात्काचिदन्तःप्रविष्टा । प्रविष्टा च सा जवेन गत्वा भद्रायाः पाणेस्तत्पत्रद्वयं बलादाच्छिद्य गृहीत्वा त्वरितपदं निष्क्रान्ता ।

का सा ? तयोः प्रत्यग्रा प्रभ्वी नित्यदारुणमुखी सात्यसेनी राजसेनैव सा । मन्दायमाने रवावित्यारभ्य राजसेना प्रच्छन्नं श्रुतवती तयोः सम्भाषणम् । इह किं कर्तव्यता मूढे चेटिके विसृज्य राजसेनया सह वयं गच्छामः ।

## सप्तदशं प्रकरणम्

# दारुणप्रतिज्ञा

सम्प्रति सार्वभौमस्नुषा ज्वलदनेकदीपामेकान्तशालामगात् । गत्वा च दीपान्तिकस्थवेत्रासने समुपविष्टा तत्पत्रद्वयं क्रमादपाठीत् ।

(राजपुत्रस्य रागलेखः)

"माननीये मातुलेयि कुमारि मधुमति ! यथा त्वं मे मातुलस्य तथा पितृष्वसुरप्यसि तनया तस्मादुभयथा त्वं मे बान्धवी । अतो नैसर्गिक आवयोः परस्परप्रेमा । राजपरमेश्वरेण मातुलेन कुमार्या अन्यत्र सम्बन्धो विचार्यत इति विज्ञाय दुरदृष्टवशाद्विलम्बमसहमानो मम पिता नित्य-प्रधूमिताननां साक्षरामपि लोकयात्रानभिज्ञां सामान्यतो रूपवतीमपि विरसां राक्षसीमिव परुषभाषिणीं सन्ततरूक्षचित्तामर्धोन्मत्तां राजसेनां मे कण्ठे बद्धवान् । सम्प्रति मम मातुलः परिणयविषये तुभ्यमेव स्वातत्र्यं दत्तवानिति विज्ञातम् । अर्हं स्थानमाक्रामतु कुमारी । उद्धरत्वसुखान्धकारपतितं बन्धुम् । मम तु मगधसाम्राज्यसिंहासनादपि तव वामाङ्कपीठ एव भूयसे गौरवायानवद्याय सम्मदाय चेत्यनपोद्यं रहस्यम् । न केवलं कामतन्त्रसाहचर्याय प्रार्थये त्वाम् । अपि तु विद्याव्यासङ्गाय भाविकालनिर्वाह्ये राज्यतन्त्रे साहाय्यकाय च याचे । यदि मां चरितार्थं कर्तुं तव करुणा । सूचय किंचित् । यते विश्वपूजिताय पाणिग्रहणविधये । राजसेनां विचिन्त्य मा भैषीः । सूर्यप्रभायां प्रसृतायां

गगने धूमकेतुर्न कश्चिदधिकारं वोढुमलम् । स्वस्ति प्रेम्णे भूयात् ।

इति ते प्रेमप्रत्युत्तराकाङ्क्षी प्राद्योतनिर्विश्वसारः ।''

(मधुमत्याः प्रत्याख्यानलेखः)

''कुमारप्रभो ! उपगतः श्रीमद्युवजनसाधारणाच्चापलाल्लिखितो भवदीयो लेखः । स्थिते महाराजे सकलकर्तव्याभिज्ञे शस्त्रेण शास्त्रेण वानेतव्यममोघं कालं भर्तृदारको मुधाक्षिपति कुत ईदृशीभिश्चर्याभिः ? मम तु भावि निर्णेतुं मत्तोऽपि लोकानुभूतिमांत्साध्वसाधुविभागज्ञोऽस्त्यपरः । भाविकालनिर्वर्त्यस्य प्रजारञ्जनकार्यस्य शिक्षणायाशैशवकष्टानुभूतिविषण्णप्रकृतेर्भार्याया एव रञ्जनमुपायैः कुमारेणादौ कर्तव्यम् । यदुपसंहृतं स्वस्ति प्रेम्णे भूयादिति भर्तृदारकेण तदतीव मे गौरवास्पदं सूचनम् । महाराजपरमेश्वरपर्वतनाथदौहित्रे मधुमत्याः प्रेमा न प्रकम्प्यः केनापि हेतुना ।

इति कुमारस्य हितकाङ्क्षिणी सौचन्द्री मधुमती ।''

पठन्त्यास्तत्पत्रद्वयं राजसेनाया आननमग्निकुण्डनिभमभूत् । लोचने किरत इवाङ्गारान् । प्रागेव कर्कशा राजसेना । सम्प्रत्यभूदतिकर्कशा । अथ सैवं प्रालापीत्तस्यामेकान्तशालायाम् ।

''यत् किञ्चित्परिशिष्टमिव सुखं मे तदपि दुर्दैवेन न क्षम्यते। नष्टः पिता । बाल एव मृतो भ्राता । तमनुयाता माता । अभागधेयः पितृव्यश्चानपत्य एव मृतः । किं बहुना ? विशीर्णं महद्वज्रबाहोः कुलम् । अहं चाभवं

बहूनि दिनानि बन्दी । ततो बन्दीतोऽपि निकृष्टां दशामापन्ना यदभवं महापापकारिणो वैरिणः पुत्रेण कण्ठे बद्धसूत्रा । बन्द्या अपि मे पूर्वं नाभवत्पादयोः शृङ्खला । न वा हस्तयोः । सम्प्रति यथेष्टं श्वसितुमपि प्रतिबध्नन्ती कण्ठे शृङ्खला ।

कतिपयमुहूर्तेभ्यः प्रागहं दुर्बलान्तःकरणा भूत्वा चेटीजनकपटस्तुतिवचनवशंवदा भूत्वा प्रतिदिनं शश्वत्प्रयुक्तैः कण्ठशृङ्खलाबन्धकस्य रसनाग्रवर्ति प्रेमरञ्जितैर्लीलालापैः प्रतारिता भूत्वा भृशमपवित्रेषु भोगेषु लालसा भूत्वा विधवामिव शोचनीयां चम्पानगरीं च विस्मृत्य प्राप्तेन कुमारदेवीपदेन गर्विताऽभूवम् । अथ दर्शितवांत्सत्यमीश्वरो मह्यं ।

(सोद्रेकम्) प्रतिजाने द्वयोर्वधम् । आदौ वचनवर्ति क्षौद्रं हृदयगुप्त-हालाहलं मित्रराज्यापहारिणं क्रूरकर्माणं प्रद्योतनं करिष्यामि यमपुरातिथिम् । तदनु तदनुरूपं तस्य प्रियं पुत्रमेतं मे वञ्चकं धवम् । अनन्तरं हिमाचलं गत्वा चरिष्यामि तपः । अथवा भवतु तृतीया हत्या स्वयं कृतात्मनः । शत्रुभुक्तोच्छिष्टमिदं शरीरं वैरनिर्यातनादनन्तरं कस्मै प्रयोजनाय स्यात्? यद्यहमस्मिन् कर्मणि पापिनी भवेयं पापी भगवान् परशुधारी । नाहं धर्मतः पत्नी प्राद्योतनेः । न प्रायच्छन्मे पिता । नाप्यवृणवमहम् । मम बलात्करणस्यैवाग्निः साक्षी । किं हृतस्य धनस्य चोरो धर्मतः स्वामी स्यात्?

(सानुतापम्) अनिच्छन्त्यपि राजप्रेरितस्य बन्धुप्रीतिशून्यस्य केवलस्वार्थपरय दुष्टस्य मातुलस्य बलात्कारेण भीता सद्यो मूढाऽहं विवाहवेदिमारोहम् । तत्रैव मे दिशः प्रणष्टा इवाभवन् । सर्वं तृणीकृत्य

प्राणत्यागः कर्तव्य आसीत् । एकपदस्खलनेन पतितास्मि पाताले । अथवा प्राणत्यागोऽपि दुष्करस्तदानीं सर्वथा परवत्याः ।

(सालोचनम्) इमां प्रतिज्ञां साधयितुं मम कियानपि कालोपेक्षितः । असतैव पथै तौ हन्तुं शक्यौ । अयं धवस्य रागलेखो मह्यं पाठमेकमचकथत् । स यथा मयि नाटयति प्रेमाणं तथैव नाटयिष्याम्यहं तस्मिन् । भ्रष्टमेवेदं तुच्छं मांसपिण्डम् । तस्य भूयो भ्रंशे कविप्रतिपत्तिः ? अन्ततस्तस्य शस्त्रेण प्रायश्चित्तं कर्तास्मः । इदं तु राजसेनायाश्चित्तं न कदाचिदपि रागकश्मलं स्यात् । न मे क्रोधलवः कश्चित् दुरदृष्टशालिन्यां दूत्याम् । न वा प्राद्योतनेर्गुप्तगृहिण्योर्भ्रामरीविलासवत्योः । यस्याः पतिरेव न प्रियस्तस्याः का नामासूया ?

(ससंशयम्) एतावत्यन्तरे मम यदि गर्भः फलेत् । दुःखायैव मम यदि गर्भः फलेत् । कथं हन्तुं पारयेयं निजस्य शिशोः पितरम् ?

(पुनः सोद्रेकम्) अथवा सर्वं कर्तुं शक्यं राजसेनायाः । न केवलं तस्य पितरम् । निर्हरामि शरीरजं व्रणमिव तमपि शत्रुकुलाङ्कुरम् ।

(सोल्लसम्) अद्यारम्भ भवतु मम कपटप्रेमनाटकस्यारम्भः । अद्यारभ्य शिक्षे नयनयोर्विलासान् । जानाम्येव वचसां भङ्गीः । आहृत्य योजयामि स्मितानि मुखे ।"

इति प्रलपन्ती राजसेना रोषोन्मत्ता हसितवती विकटम् । मृत्योः खड्गधाराज्वालेव भयङ्कर्यदर्शि साहसश्रीः । तत्र प्रतिबिम्बितेव तस्याः क्रूरा प्रतिज्ञा ।

"प्रतिजाने द्वयोर्वधम् ।"

अष्टादशं प्रकरण्

## अरण्यरोदनम्

इतरद्रङ्गस्थलं गच्छामः। तस्मिन्नेव प्रदोषसमये गिरिव्रजनगरसमीपवर्तिनि ब्रह्मठाख्येऽग्रहारे कस्मिंश्चित्पर्णकुटीरे शय्यायां ज्वरग्रस्तां मातरम् उपासमाना तत्पादसविधे समुपविष्टा काचन कैरवलोचना। सा यद्यपि वर्णेन श्यामला तथापीन्द्रनीलसालभञ्जिकेव लसत्प्रभा। यद्यपि तस्याश्चक्षुषी न विलासानभिज्ञे तथापि विशाले। यद्यपि तस्याः केशपाशो न मसृणस्तथापि दीर्घः। यद्यपि तस्या अङ्गानि स्थूलान्यसुकुमाराणि च भवन्ति तथापि बलवन्ति कृशमध्यान्यारोग्यवन्ति च पुष्णन्ति कामपि शोभाम्। माभूदस्यां विश्वमोहनं सौन्दर्यं तथाप्यस्ति विश्वमोहिनी वाक्। माभूवन्नस्यां हृदयहारिणो विलासास्तथापि वाचि सन्ति सहृदयहृदयस्पृशो भावाः। इयं स्मरणीयपुण्यकर्मणो वरकर्मणः पुत्री भ्रमरी। सार्वभौमकुमारस्य विश्वसारस्य मनोरथव्यूहे भागस्वामिनी भद्रमुखी। पित्रा सुशिक्षिता व्युत्पन्ना। स्वयं सरस्वत्यानुगृहीता कवीश्वरी। अष्टादशवर्षवयस्का युवतिः।

वरकर्मा वर्षात्प्राग्दिवङ्गतः। स निजे जीवितकाले महान्पण्डितोऽपि किमपि धनं न सम्पादितवान्। यत्सम्पादितं तेन नित्यं तपश्चरता महत्पुण्यं तत्तेन सह यातम्।

सुकर्मा वरकर्मणः पुत्रः। भ्रामर्याः सोदरो ज्यायान्। स न शास्त्रेषु पित्रा

शिक्षितः । अपि तु पितुर्मित्रादाचार्यविषमसिद्धेः शस्त्रविद्यासु शिक्षितः । स आचार्यस्य शिष्येषु निकृष्टश्रेण्यां गणनीयोऽपि राजपुत्रस्य विश्वसारस्यानुग्रहान्मासषट्कात्पूर्वं सहस्रपतिरङ्गसैन्येऽभवत् । लभते मासिकं वेतनं पञ्चशतं कार्षापणानाम् । एक एव वसति गिरिव्रजे । माता सुनन्दिनी दुहिता भ्रामरी च ब्रह्ममठे वसतः ।

प्रकृतमनुसरामः । अद्य प्रदोषे ज्वरवेगेन सुनन्दिन्याः संज्ञा लुप्ता । गृहदासीद्वारा पत्रे प्रेषितेऽपि सुकर्मा न गृहानागतः । न वा किञ्चिदस्ति वैद्यसाहाय्यकम् । मातुः पादसविधस्था भ्रामरी मुहुर्मुहुराह्वयन्त्यपि प्रत्युत्तरमलभमाना निराशा भूत्वा स्वानि भाग्यानि निन्दन्ती मन्दंमन्दमरोदीत् ।

“भगवति कात्यायनि ! तव कस्मादीदृशोऽस्मत्कुटुम्बे कोपः ? पूज्यपादेन यत्ते महाभक्तिपूर्वकं समर्चनं कृतं तस्येदमेव किं फलम् ? नूतनेऽधिकारे मम भ्राता न किञ्चिद्धनं यशो वा सञ्चिनोतीति विज्ञायते । नाशयति किल वेतनं दुर्व्यसनपरायत्तः । सम्पादयत्ययशो महतः कुलस्य । ईदृशः कृतदारश्चेद्दाराणां किं सुखं कुर्यात् ? अस्त्वेतत्सर्वम् । ईदृशे कष्टसमयेऽपि यन्मातरं द्रष्टुं नायाति तदतीव दुःसहमालस्यम् । उताहो निर्लक्ष्यत्वम् ।

अहं पितरि जीवति प्रतिदिनं सरस्वतीसेवया कालं क्षिपन्ती न व्यजानामितरम् । पूज्यापादः पिता मामनुरूपाय वराय दातुं प्रयतमान एवापुनर्बोधाय नेत्रे निमीलितवान् । अनन्तरं सार्वभौमकुमारः कुमारदेवीपदेन मां प्रालोभयत् । मातुर्भ्रातुश्च सम्पत्कामिनो-रनुरोधेन कुटुम्बचिन्तया निराडम्बरजीवितप्रियाप्यहं तस्य वरणम्

अन्वमोदे । अर्पितवत्यस्मि च तस्मै हृदयम् । (सानुतापम्) प्रत्याख्यानभयेन चापलेन वा तस्या सकृदनुरुन्धतोऽङ्गीकृतवत्यस्मि च बाह्यानुपचारान् । तथा प्रतार्य मां योऽन्यां परिणीतवान् । परिणयादनन्तरमद्यापि न दर्शयति मह्यं मुखम् । मन्ये मामभागधेयां स मनस्तो दूरीकृतवान्। परिव्राजिका देवरक्षिता तु परह्यो व्याख्यातवती ममाग्रे तस्य गुणान् स किल धर्मपरिहासको भोगैकलक्ष्यः । परनिन्दको दुरहङ्कारवान् । सत्यरहितो वाग्मी । धैर्यरहितो वीरः । हृदयहीनो रसिकः । दयारहितोऽधिकारी । दानरहितः सम्पन्नः । क्रियापटुरप्यलसः । अभिजातोऽपि नीचसहवासी । किं करोमि? अदूरदर्शनात्पतिताऽस्मि गर्ते । सम्प्रति स्पष्टं मे भावि । तस्य कामिनः प्रभोर्भार्यास्वन्यतमया भवितव्यं स चेदनुगृह्णीयात् । न चेद्ब्रह्मचारिण्या भवितव्यमामरणम् । गुणवति गुणशून्ये वा प्रीतिमति प्रीतिरहिते वा यत्रोत्सृष्टं हृदयं तत्रैव वर्तताम् । नोत्सहे प्रतिनिवर्तयितुम् । न शक्नोमि प्रतिनिवर्तयितुम् ।

माता च मे बलवता पतिविश्लेषदुःखेन महता च पुत्रदुश्चर्याश्रवणतापेन मनसोद्दिष्टस्य दुहितुर्वरस्य परुषादुपेक्षणाच्चिन्ताग्रस्ता दशामीदृशीम् अपन्ना । मातुर्ज्वरस्य मनोव्याधेर्नापरो हेतुः । मन्ये नेमं ज्वरं मातोत्तरितुं शक्नुयात् । अथ का गतिर्मे ? ”

इत्यादि भ्रामर्यास्तद्विलपितं धूममलिनकृत्रिमकुलायश्रवणाः सदनभित्तयोऽपि श्रोतुं नापीपरन्। मातात्वन्यस्मिन्नेव लोके वर्तते । तत्सर्वमरण्यरोदनमेवाभूत् । महाकालेश्वरप्रदोषताण्डवबद्धदृष्टिस्तस्या इष्टदेवता भगवती कात्यायनी तदश्रौषीद्वा उताहो नाश्रौषीत् ।

एकोनविंशं प्रकरणम्

## फलिन्यां सुमित्रः

अन्यद्रङ्गस्थलं व्रजामः । तस्मिन्नेव रात्रिमुखे निजकार्यनाटकस्य नान्दीं करिष्यन्गौतमः सुमित्रः पुरकन्यासु गणनीयां कमनीयां प्रगल्भचर्यां विलक्षणधैर्यां सङ्गीतसाहित्ययोरद्भुतशक्तिशालिनीं फलिनीं द्रष्टुमगात् ।

फलिन्याः पिता नगधरो राज्ञः सत्यसेनस्य रक्षणाय यथा स्वान्प्राणानर्पितवान् । सा कथाऽस्माकंपाठकैर्देवरक्षितामुखाच्छ्रुता। नगधरस्य मरणकाले तस्य पत्नी मालती गर्भिणी । मालत्याः पितृगृहं गिरिव्रजे । नगधरस्य पूर्वेपुरुषाश्च गिरिव्रजवासिन एव बभूवुः । नगधरस्य पितैव वज्रबाहुना सह चम्पां गतः । वज्रबाहुनैव नगधरस्य पित्रे दण्डनायकपदव्या सहाङ्गराष्ट्रे किमपि संस्थानं दत्तम् । पितुरनन्तरं नगधरस्तल्लब्धवान् । अङ्गराष्ट्रपतनादनन्तरं प्रद्योतनस्तन्नगधरस्य जायाहस्तादाच्छिद्य सहभूरिणा चरेण धनेनात्मसखाय नगधरस्य पितृव्यपुत्राय यशोधराय दत्तवान् । दण्डनायकपदवीं च साम्राज्यसैन्ये अङ्गराष्ट्रे संस्थानवानपि यशोधरो गिरिव्रज एव वसतिमान् । सा सम्राजो नीतिः । यत्साम्राज्ये संस्थानवन्तः सर्वेऽपि राजधान्यामेव वसेयुः हृतस्वा मालती च गिरिव्रजमेवागत्य मातुर्गृहं शिश्रिये । मालत्याः पिता तु गिरिव्रजे सुप्रसिद्धः पण्डितो भट्टनागेश्वरः । सोऽङ्गमगधयुद्धकाले नास्मिन्भुवने । तस्य द्वे दुहितरावेव सन्ततिः। एका मालती । अन्या मल्लिका । मल्लिकायाः श्वशुरश्च पित्र्यां विपुलां सम्पदं दुर्व्यसनायत्तो

नाशयित्वा पुत्रं ज्येष्ठायै देव्यै समर्प्य जगाम किल पञ्चत्वम् । स च मल्लिकायाः पतिर्नामतो गौरीदत्तः । स मालत्या आगमनात्प्रागेव श्वश्रूगृहं भेजे ।

नगधरस्य मरणादनन्तरं वर्षद्वये व्यतीते मालत्यसूत फलिनीम् । यशोधरः फलिनीजननादनन्तरं नगरपरिषदोऽग्रे फलिनीं गौरीदत्तस्यैव पुत्रीं प्रकटयितुं प्रार्थयन्नभियोगमकरोत् । "न केवलं न फलिनी नगधरस्य पुत्री । गौरीदत्तस्यापि न शास्त्रसम्मता पौनर्भवी दुहिता मालत्याः पौनर्भवेन विधिना गौरीदत्तेनानूढत्वात् । अधर्म्यैव तनया सा मालतीगौरीदत्तयोः । तस्मान्मालतीगौरीदत्तौ प्रायश्चित्तीयौ च प्रकटयितव्या" वितितस्यानुबन्धप्रार्थना ।

तत्र परिषदि नगधरयशोधरयोर्वृद्धो ज्ञातिः पण्डितवाणीधरः वासिष्ठो राणायनः, मौद्गल्यो जम्बुकश्च नगरमहापरिषदा नियुक्ताः सभ्याः । अभियोगो यथाविधि चलितः।

"फलिनी नगधरस्यैव पुत्री । मासानां त्रीणि नवकानि मालती गर्भं धृतवती ।" इति गौरीदत्तः प्रतिवादं चक्रे । विचारणादनन्तरं परिषदि मतभेदस्तीव्रोऽभूत् ।

जम्बुक इत्थं निजं निर्णयं प्रकटितवान् । "यद्यपि नगधरस्य मरणकाले मालती गर्भिणीति विश्वसनीयं साक्ष्यमस्ति तथापि दुहितुरतीत-कालजत्वात्तस्मिन्नेव गर्भे मासानां नवकत्रये व्यतीते फलिनी जातेति निरूपयितुं भारोऽस्ति मालतीगौरीदत्तयोः । तौ च निरूपयितुं न प्राभूताम् । मालत्या स्वसुर्मातुश्च साक्ष्यं न विश्वसनीयं वन्धुगौरवरक्षणाय

तयोरनृतवादित्वस्य सम्भवात् । पूर्वो गर्भः स्रुतो भवेदिति वक्तुं शक्यं साधारणप्रसवकालस्यात्ययात् । तस्मात्फलिन्येकस्मिन्गृहे वसतो-र्मालतीगौरीदत्तयोरधर्म्या दुहिता निर्णीयते । यावत्प्रायश्चित्ताचरणं मालतीगौरीदत्तौ सङ्घाद्बहिरेव वर्तितव्यौ । पापसन्देहेषु परिषदा निर्दोषित्वप्रकटनं कर्तुमशक्यं सङ्घशुद्धेः सुतरां रक्षणीयत्वात् " इति ।

राणायन एवं निजं निर्णयं दत्तवान् । "मातुर्भगिन्याश्च साक्ष्यं विश्वसनीयं वा भवत्वविश्वसनीयं वा । अस्ति साक्ष्यं विश्वसनीयं नगधरस्य मरणकाले मालती गर्भिणीति। असाधारणमपि त्रिगुणनवमासगर्भ-धारणं नास्वाभाविकम् । फलिनीं गौरीदत्तस्याधर्म्यां पुत्रीं प्रकटयितुं प्रार्थयतोऽभियोक्तुरस्ति भारो मालत्याः पूर्वो गर्भः स्रुत इति निरूपयितुम् । स च तन्निरूपयितुं नाशकत् । अनुमानं तु दुर्बलमनैकान्तिकत्वात् । नैतादृशेष्वभियोगेषु सन्देहेऽपि दोषित्वप्रकटनं न्याय्यम् । न केवलमयं मालतीगौरीदत्तयोः प्रायश्चित्तेन विस्मरणीयो विषयः। ईदृशेन प्रकटनेन निरपराधायाः कस्याश्चिच्छिशोर्भाव्यन्धकारबन्धुरं स्यात् । तस्मात्परिषदो धर्मनिर्णयभारोऽत्र भूयान् । सन्देहेषु फलमभियुक्तायैव दातव्यमिति सामान्यन्यायसूत्रमेवात्र लगनीयं वयं मन्यामहे । फलिनी नगधरस्य पुत्री नेति वक्तुं नास्ति निःसंशयं प्रमाणम् । तस्मादभियोगस्तिरस्कृतः" इति ।

पण्डितवाणीधरस्तु राणायनस्यैव निर्णयमन्वमोदत । तस्माद्यशो-धरस्याभियोगो विफलोऽभवत्। अबहिष्कृतावेव भवतां सङ्घेन मालतीगौरीदत्तौ ।एवमपि फलिनी नगधरस्यैव पुत्रिकेति नास्ति स्पष्टो निर्णयः परिषद इति केचित्तां पश्यन्ति सन्दिग्धयैव दृष्ट्या। नित्यं परनिन्दाव्यसनिनः परे तां गौरीदत्तस्यैवाधर्म्यां पुत्रीं गदन्तश्चरन्ति ।तैः

सह मिलन्ति यशोधरस्तदीयाश्च । अन्ये तां सम्पूर्णं विश्वसन्ति नगधरस्य पुत्रीम्। अद्यापि मालतीफलिन्यौ गौरीदत्तकुटुम्बेनैव सह वसतः ।

प्रकृतमनुसरामः । गृहानागतं गौतमं सुमित्रं गौरीदत्तो महता गौरवेण प्रत्युदगमत् । सुमित्रस्य लक्ष्यं तु फलिन्या सह सम्भाषणं न गौरीदत्तेन । तच्च स गौरीदत्तस्य पुरः सूचितवान् । तन्निवेदितं गौरीदत्तेन फलिन्यै । अनन्तरं तदनुमत्या विविक्तायां कुट्यां फलिनीसुमित्रयोः सम्भाषणाय गौरीदत्तेन स्थानं प्रदर्शितम्। पूर्वं प्रविष्टस्तां कुटीं सुमित्रः । अनन्तरं फलिनी प्राविक्षत् । उपविष्टं सुमित्रं स्थितैव फलिनी स्वागतेनाभ्यनन्दीत् । अनन्तरं तदनुज्ञातोपविष्टा । कटे सुमित्रः । तले फलिनी । दीपं तैलेनापूर्य गौरीदत्तो निष्क्रान्तः ।

आत्मनोढे राजकीयकार्ये फलिनीं करणत्वेनोपयोक्तुं सुमित्रस्य दृष्टिः । सुमित्रो जानाति फलिनीं सा यादृशी प्रज्ञावती यादृशी च कार्यदक्षा । यद्यपि सुमित्रस्यास्ति शत्रुजनकल्पिते फलिनी स्वच्छन्दचरिणी दुष्टकन्येत्यपवादे किञ्चिद्विश्वासः । तथापि कार्यार्थी तां गौरवेणैव स तामद्राक्षीत् ।

अभूवन्पञ्चषा एव क्षणाः । तावत्यन्तर एव सुमित्रः फलिन्याः प्रसन्नमुखज्योतिषि लग्नदृष्टिस्तस्या आयत्त इवाभूत् । स काम इति वक्तुमशक्यः । सुमित्रः कामात् सुतरां दवीयान्। स प्रेमेति वक्तुमशक्यः । कार्य एव सुमित्रस्य प्रेमा न कस्याञ्चिद्व्यक्तौ । सा करुणेति वक्तुमशक्या । नास्ति फलिनीमुखे हि किञ्चिदपि करुणाजनकं दैन्यम् । स केषुचिद्वस्तुषु वैभवेन ज्वलन्त्याः श्रियो देव्या आकर्षणविशेषः ।

फलिनी च जानाति सुमित्रं स यादृशो विद्वान् तादृशो नयतन्त्रवित् । विशेषतः स नगरपालस्य पितृबन्धुः । सा तस्मात्तमशङ्क्ष्टि राजकीयकार्येऽवतीर्णम् ।

सम्भाषणमारब्धम् ।

सुमित्रः - "भद्रे नागधरि ! तव पूर्वजा अस्माकं पूर्वेषां सखायः । अहं जानामि त्वां पितृव्येणोपेक्षितां कष्टे स्थिताम् । यदि मया ते कश्चिदुपकारः कर्तुं शक्यस्तत्राहं भवेयं सन्तोषेण बद्धपरिकरः । नाहमात्मानं वदामि प्रतिफलनिरपेक्षं परोपकारिणम् । तथाप्येतावन्मया शक्यते वक्तुम् । मया प्रार्थ्यमानं प्रतिफलमल्पम् । न तद्धनम् । न स ते पाणिरात्माभिमताय पुत्रायान्यस्मै वा ।"

फलिनी - "आर्य गौतम ! यन्मां कोणे क्वापि स्थितां पितृव्येण नीचया दृष्ट्योपेक्षितां तारयितुं भवादृशस्य बुद्धिरुत्पन्ना तन्मे भाग्यम् । यद्भवता मत्तः किमपि प्रार्थ्यते तत्कर्तुमहं सर्वथा सन्नद्धा । दुहितरमिव फलिनीमाज्ञापयतु भवान् । धर्मविरुद्धं भवानाज्ञापयतीति न ममाविश्वासः ।"

सुमित्रः - "भद्रे ! द्वेधा प्रवर्तन्ते जनानां स्नेहाः । रक्तसम्बन्धात्कार्यसम्बन्धाच्च । नावयोरस्ति रक्तसम्बन्धः । कार्यं ते किमपि कृत्वा प्रथमं भवितुमिच्छामि ते सम्बन्धी । अनन्तरं याचे प्रतिफलम् ।"

फलिनी - "मह्यमेव दीयतां तत्र कार्यसम्बन्धे प्रथमोऽवकाशः ।"

सुमित्रः - "न तद्युक्तम् । अहमस्मि ज्यायान् । त्वमसि कनीयसी ।

तस्मात्तवैव कार्यं मया प्रथमं कर्तव्यमिति न्याय्यम् । यदि मत्तः किमपि कार्यं नापेक्ष्यते त्वया तर्हि त्वामाशिषाऽभिनन्द्य गच्छेयमहम् ।

फलिनी – "मागमद्भवान्मम गृहमागत्य व्यर्थाशः । केनचित्समयेनाहं भवता सह कृत्रिमं स्नेहबन्धमङ्गीकुर्याम् ।"

सुमित्रः – (सोल्लासम्) "कः समयः ?"

फलिनी – कृतकृत्यया मया कर्तव्यं कार्यं प्रागेवावेदयतु भवान् । तद्यदि मे साध्यं धर्माविरुद्धं च स्यात् । तर्हि तत्कर्तुमङ्गीकृत्य मम कार्यमावेदयामि भवते ।"

सुमित्रः – "सम्प्रत्येवावेदयामि ते मम कार्यम् । तथापि त्वयैव वक्तव्यं स्वं कार्यमादौ । तन्मे साध्यं चेदनन्तरमावयोः कृत्रिमं बन्धुत्वमारभ्येत ।"

फलिनी – (स्वगतम्) "नास्ति ममानेन साध्यं किमपि कार्यम् । तथापि वक्तव्यं किमपि मया यथाऽयं निजं कार्यं वदेत् । ईदृशेन सह स्नेह उपस्थितो न प्रत्याख्यातव्यः ।" (प्रकाशम्) आर्य ! मम पितृव्यः सामन्तयशोधरो यथा मां भ्रातृपुत्रीमङ्गीकुर्वन्नात्मना पुराकृतेऽभियोगे पश्चात्तापं दर्शयेत्तथा भवता कर्तव्यम् । एतन्मे मुख्यं कार्यम् । किमिदं भवतः साध्यम् ?"

सुमित्रः – (किञ्चिदालोच्य) "नागधरि ! शक्नोम्येव ते कार्यं साधयितुम् । (इतस्ततो विलोक्य मन्दस्वरेण) अथ वदामि मे कार्यम् । हिरण्यनाभस्य गृहे गुप्तं कौलिकसङ्घो मिलति । तद्रहस्यानि यावच्छक्यं विदित्वा

तानि त्वया मह्यं कथयितव्यानि । उपायास्तु त्वयैव वेत्तुं शक्याः । तव प्रज्ञायां ममास्ति भूयान्विश्वासः ।"

फलिनी - (स्वगतम्) "इदं राजकीयमेव किमपि कार्यम् । अयं पण्डितो मन्यते परन्तपानामुदयङ्कराणां वा तत्र प्रवेशोऽस्तीति । अहं जानामि नास्माकमुदयङ्कराणां तत्र लेशतोऽपि सम्बन्धोऽस्तीति । न जानामि परन्तपानामस्ति वा न वा । नास्त्यस्माकं नायकस्याज्ञा परन्तपानां विरोधेन न वर्तितव्यमिति । तस्मात्तत्रास्त्यस्माकं व्यक्तिस्वातन्त्र्यम् । निग्राह्या एव परन्तपाः पापाचरणाः यथा मे मनः कथयति । तस्माद्वाचं दास्याम्यस्मै"। (प्रकाशम्) "साध्यमेव मे कार्यमिदम् । अङ्गीकरोम्यहं साधयितुम् ।"

सुमित्रः -"नागधरि ! सम्पन्नं मे वाञ्छितम् । गच्छामि पुनरवलोकनाय । इतः परं ते सुमित्रो मातुलवद्बन्धुर्भवेत् । सुमित्रश्च विश्वसिति फलिनीं साक्षाद्भागिनेयीवत् । साधायाम्यहम् ।"

फलिनी - "भाग्यमिदं मे मातुः । यत्तस्या इयता कालेन महान्भ्राता मिलितः ।"

सुमित्र उत्थितः । अनूत्थिता फलिनी । पूर्वः परामामन्त्र्य निष्क्रान्तः । गच्छंत्स एवं मनसाऽकार्षीत् । "सुमित्रः फलिन्यां सफलोऽभूत् । फलिनी च भविष्यति कौलिकसङ्घे सफला " । इति ।

विंशं प्रकरणम्

## महामन्त्री तथैव च

तस्मिन्नेव रजनीमुखे गिरिव्रजे राजप्रासादस्थ सप्तभूमिकविमानस्य सप्तम्यां भूमिकायां ज्वलद्दीपिकायां कमपि मुख्यं विषयं मन्त्रयितुं सार्वभौमो महामन्त्री राष्ट्रियोऽन्तरङ्गसचिवश्च मिलिताः। प्रतिमन्त्रं महामन्त्री निर्धारणीयविषयशाखाकर्मसचिवो राज्ञोऽन्तरङ्गमन्त्री च राज्ञः पुरो भवेयुरिति निबन्धनम् । रक्षिजनसर्वाधिकारी कर्मसचिवो राष्ट्रिय उच्यते ।

सम्राट् प्रद्योतनः सम्प्रति पञ्चपञ्चाशद्वर्षदेशीयः । तस्याकृतिर्यथा रमणीया तथा प्रसन्ना । तस्य बुद्धिर्यथा सूक्ष्मा तथा व्यापिका । स यथा नयवित्तथा कार्यसाधकः । नित्यस्निग्धा दृष्टिर्नित्यस्मेरं मुखं नित्यमधुरा वाणी चेति तस्य स्वभावसिद्धानि लक्षणानि । समुद्रवद्गम्भीरं तस्य हृदयं तु तत्त्वतः कोऽपि न ज्ञातुं प्रभवेत् ।

महामन्त्री गौतमः शिवनाथः सप्ततिवर्षवयस्कः । श्यामोऽपि प्रसन्नाकृतिः । उशनसो नीतिसारस्य वेत्ता । वक्ता । अद्याप्यविकलसर्वेन्द्रियः । प्रीतिरक्षितात्यायतबहुलश्मश्रुपटलः।

राष्ट्रियः सत्यरथः सप्तविंशतिवर्षवयस्कः । नातिस्थूलदृढपटिष्ठगात्रः । धवलस्तेजस्वी च । सुन्दरो वीरश्च । बुद्धिमान्कृतविद्यश्च । उत्साही

कुशलश्च । रसिकः सुशीलश्च । ईश्वरभक्तः कर्मयोगी च । साहसी पापभीरुश्च । नयविद्धार्मिकश्च । सतां पुरोयायी । सागर इव गभीरः कुलाचल इव धीरः । वक्तव्येषु सार्वभौमस्यापि पुरो निर्भयः । श्रीनाथभट्टपादानां पुत्रः । पवित्रः कर्मसु । चित्रः प्रसङ्गेषु ।

अन्तरङ्गसचिव आत्रेयः सोमनाथः पञ्चत्रिंशद्वर्षवयस्कः । विद्वानपि गर्ववान् । बुद्धिमानपि विमर्शालसः । राजनीत्यभिज्ञोऽपि प्रायो विलासगोष्ठीरसिकः । वक्तापि विदूषकप्रकृतिः । दर्शनीयाकृति-रप्यदृढगात्रः । सम्राजो मातुलपुत्रः । दण्डनायकस्य सामन्त-तारानाथस्यानुजन्मा ।

तत्र महामन्त्री मन्त्रस्य द्वारमुद्घाटितवान् ।

शिवनाथः - "भट्टारक ! यौ सम्प्रति परन्तपोदयङ्करसङ्घौ राष्ट्रं बाधेते तन्निर्मूलनाय नास्ति साधारणरक्षिदलस्य शक्तिः ।"

सत्यरथः - "एकैकः सङ्घो बहुभिः शतैर्वीराणां बद्ध इति विज्ञायते । अतो रक्षिणां कष्टं भवति तावभियोक्तुम् ।"

प्रद्योतनः - "सत्यम् ।"

शिवनाथः - "एकं पूर्णं सैन्यदलमत्र कार्ये विनियोक्तव्यम् ।"

सत्यरथः - "यथाविधि युद्धं च कर्तव्यं स्याद्बहुषु सन्दर्भेषु । युद्धमकृत्वा केवलं परिशोधनतन्त्रेण तौ दुष्टसङ्घौ नैव साध्यौ भवतः । तस्माद्युक्तं

महामात्यस्य सूचनम् ।"

प्रद्योतनः - "युक्तम् । नाधिकं पञ्चसहस्रमत्र योधानाम् ।"

शिवनाथः - "दण्डनायकसिंहवाहनस्य दलमत्र कार्ये नियोक्तुं योग्यम् । स यथा रणप्रवीणस्तथा प्रज्ञावान् । अपलितशिरस्को वृद्धः स लोकानुभवे । अलुब्धो राजभक्तः । अनलसः कार्यकृत् ।"

सत्यरथः - " स प्राणानपि न लक्षीकरोति राजकार्येषु । अर्हत्येव स ईदृशं कार्यभारं वोढुम् ।"

प्रद्योतनः - "सत्यम् । तस्य वीर्यमद्‌भुतम् । बुद्धिरपारा । गुणाश्च विमलाः।"

महामन्त्री सोमनाथस्य मुखं दृष्टवान् । स सम्प्रतिलब्धावकाशो मौनं विसृष्टवान् ।

"अस्य सदसो "महामन्त्री तथैव च" इति नाम योग्यम् । आलोचनकर्तात्र वस्तुत एको महामन्त्री । राष्ट्रियस्तथाकारः । महामन्त्रिप्रोक्तं तथेत्यङ्गीकरोति । सार्वभौम एवकारः । तदेव युक्तमिति निर्धारियति महामन्त्रिप्रोक्तम् । अहमस्मि चकारः । चकारः पादमिव पूरयाम्यालोचनसदः ।"

राजा स्मयते ।

सत्यरथः – "अस्माकं सचिवमहाशयो बाल्यं विहाय कदा वा स्यात्प्रौढः ?"

शिवनाथः - "कतिपयैर्वर्षैरस्माकं सचिवमहाशयो वक्रित्वम् अवलम्बमानश्चरति। संवत्सरेषु गच्छत्सु तत्र भवानधिकं बालो भवति । अस्य पुनरपि ऋजुगतेरवलम्बनाय कियान् कालोऽपक्षित इति दैवज्ञैरेव वक्तव्यम् । नचेदालोचनसदः क्वेदृशम् ? क्व बालचेष्टानुगुणा वाग्धोरणी ?"

सोमनाथः – "दण्डनायकसिंहवाहनस्यातिचारान्मम वक्रित्वमेव वरम् । सोऽनतीतत्रिंशद्वर्ष एवालभिष्ट वृद्धबिरुदम् । माभून्ममात्र जन्मनि स हेयो बिरुदः ।"

राजा भूयो हसति ।

एकविंशं प्रकरणम्

## अनुमानभेदाः

सोमनाथः - "क्षमतां ममाप्रस्तुतं प्रसङ्गं राजसदः । प्रकृतमनुसृत्य किञ्चित्पृच्छामि । (राष्ट्रियमवलोक्य) आर्य ! कोऽयं परन्तपसङ्घस्य नेता निशम्भुः ?"

राष्ट्रियः- "महाराजसुचन्द्रेण हतस्य दुर्जयस्य राक्षसस्य सम्बन्धी कश्चन राक्षसो निशम्भुरिति रक्षिकार्यालयस्यानुमानम् ।"

सोमनाथः - "निशम्भुदुर्जयसम्बन्धी चेदेतं सङ्घमान्ध्रेषु बध्नीयात् । न मगधसाम्राज्ये ।"

सत्यरथः - "तस्यान्ध्रेषु नास्ति प्रभुत्वप्रतिघटनक्षमं साहाय्यकम् । अत्र साम्राज्येतु बहवः सन्ति जरासन्धवंशपक्षपातिनो राजन्यवीराः । येषां पलायितः समितिञ्जयो नेता । निशम्भोः समितिञ्जयस्य च कश्चन सन्धिरासीदित्यस्माकमनुमानम् ।"

प्रद्योतनः - (सचिवमालोक्य) "भाव तव कीदृशमनुमानं निशम्भु-विषये?"

सोमनाथः - "काश्मीरपतेर्बलवर्धनस्य ज्येष्ठभ्रातृपुत्रः कीर्तिवर्धनः

कारागृहे मृत इति वार्ता मिथ्या । स एव कालेन यौवनं प्राप्तो निशम्भुनाम्ना प्रच्छन्नो बार्हद्रथेन समितिञ्जयेन सह मिलितः । समितिञ्जयकीर्ति-वर्धनयोः कश्चन सन्धिरासीदित्यस्माकमनुमानम् । देशान्तरे सङ्घबन्धने कारणं यथा राष्ट्रियानुमाने ।"

प्रद्योतनः – "कीर्तिवर्धनस्य शवः संस्करणार्थं पुरोहिताय दत्तो राज्ञा । यथा कथयति राजभगिनी विशोका । अथ कथं तस्य मरणवार्ता मिथ्येति वक्तुं शक्यम् ?"

सोमनाथः – "कस्यचिदौषधस्य बलान्मूर्छितं मृत इति भ्रान्त्या संस्करणार्थं पुरोहिताय दत्तवन्तोऽधिकारिणः । आसीत्पुरोहितस्य हस्तश्च कीर्तिवर्धनविमोचनतन्त्रे ।"

प्रद्योतनः – "आश्चर्याणि शृणोमि । कुतोऽस्याः कथाया उपलब्धि-र्भावस्य ?"

सोमनाथः – "कस्माच्चित्काश्मीरब्राह्मणात् ।"

प्रद्योतनः – (महामन्त्रिणमवलोक्य) "आर्य, महामात्य ! भवतः कीदृशमनुमानं निशम्भुविषये ?"

शिवनाथः – "महाराजेन काम्यकवनदुर्गाधिकाराच्च्यावितः किरातेश्वरो वीरमल्ल एव सुमतिसमितिञ्जयाभ्यां मिलितः स एव निशम्भुनाम्ना प्रच्छन्नः करोति दुष्टेषु कर्मसु सुमतिसमितिञ्जययोः साहाय्यकम् । इदमस्माकमनुमानम् ।"

प्रद्योतनः – "निशम्भुविषये विदिता अनुमानभेदाः । अथ गजवीरविषये त्रयाणां चानुमानभेदानाकर्णयितुमिच्छामि ।"

सत्यरथः – "वज्रबाहुभ्रातुः सुबाहोः पौत्रो वीरबाहुरङ्गमगधयुद्धे बालः यद्यपि तस्य पिता दीर्धबाहुर्युद्धे निहतस्तथापि तस्य माता पितुर्गृहे वर्तमाना सह बालकेन मगधविजयादनन्तरं पलायिता । न च लक्षीकृता भट्टारकेण । स एव कालेन यौवनं प्राप्तो गजवीरनामधारी पितृव्यस्य सत्यसेनस्यार्थे नयत्युदयङ्करसङ्गमित्यस्माकमनुमानम् ।"

सोमनाथः – "अस्माकमनुमानं वक्तुं भयं भवति ।"

प्रद्योतनः – "उक्तमात्रे तस्मिन्ननुमाने कश्चित्पिशाच आगत्य भावं किं गृह्णीयात् ।"

सोमनाथः – "न पिशाचः । पिशाचादपि भयङ्करशक्तिर्भट्टारक एव गृह्णीयादिति मम भयम् ।"

प्रद्योतनः – "किं त्वमेव गजवीरः ?"

सोमनाथः – "नाहम् । मम बन्धुः कश्चित् ।"

अमात्यराष्ट्रियौ सकौतुकं शृणुतः ।

प्रद्योतनः – "तं ते बन्धुं गृह्णीम इति किं भयम् ? उताहो त्वामेव गृह्णीम इति ।"

सोमनाथः – "मामेवेति भयम् ।"

प्रद्योतनः – (सहासम्) "यदि वदेः गृह्णीमो वा न वा । यदि न वदेः निश्चयेन गृह्णीमः ।

सोमनाथः – "निश्चितादनर्थात्सन्दिग्धोऽनर्थो वरम् । अस्माकं भर्तृदारकस्तपसे जगाम किल हिमवन्तम् ।"

वाक्यमध्ये प्रविश्य राजा – "किं विशाखः ?"

सोमनाथः – "अथकिम् ।"

प्रद्योतनः – "ततस्ततः ।"

सोमनाथः – "तत्र योगाभ्यासे तस्य पलायितोऽङ्गराजः सत्यसेन एव गुरुः किल संवृत्तः । योगविद्याग्रहणादनन्तरं गुरुदक्षिणां दातुमिच्छन्तं शिष्यं स गुरुरात्मनोऽङ्गराष्ट्रसम्पादने साहाय्यकं कुर्विति किल दक्षिणां वव्रे । अनन्तरं धर्मपाशबद्धो गुरोरङ्गराष्ट्रसम्पादनाय कुमार एव गजवीरनाम्ना प्रच्छन्नो भूत्वा नयत्युदयङ्करसङ्घमिति ममानुमानम् ।"

प्रद्योतनः – (सातङ्कं स्वगतम्) "इदमप्येकमनुमानस्थानम्" (प्रकाशम्) "आश्चर्याणि शृणुमः । कुतस्तवास्याः कथाया उपलब्धिः ?"

सोमनाथः – "कस्माच्चिद्यात्रिकाद्ब्राह्मणात् ।"

सत्यरथः - (दृढस्वरेण) अस्माकमनुमानं तु सत्यसेनस्य प्रतीहारी महाबलः सुतरां साहसी कालनाथ एव गजवीर इति ।"

प्रद्योतनः - "स तस्मिन्महायुद्धे क्वासीत् ?"

शिवनाथः - "स महामन्त्रिणं सुमतिं शरणागतं समितिञ्जयं च रक्षन्कुत्रापि गृहे चम्पायामेव यावदस्मद्रोधं निलीनः स्यात् । अनन्तरं ते त्रयः सुखेन पलायिताः स्युः ।"

द्वाविंशं प्रकरणम्

## आनय निजात्मजातम्

एवं चलति सम्भाषणे द्वारपालोऽन्तः प्रविश्य दूरादेवमवादीत् – "महाराज! आचार्यपुत्री राजकाली देवी देवं द्रष्टुं द्वारमध्यास्ते" इति। तदाकर्ण्य राजा सा प्रविश्यतामित्यभ्यधात्। अनन्तरं द्वारपालः प्रावीविशत्ताम्। प्रविष्टायां च तस्यां स पुनर्गतो द्वारम्।

राजकाल्याः शरीरं यद्यपि श्यामलं तथापि तन्मुखं ज्वलत्यसाधारणेन केनापि वर्चसा। मुक्तबन्धो नितम्बातिलङ्घी तस्याः केशपाशः प्रायः पश्चाद्भागं सर्वमाक्रम्य भ्राजते। भ्राजमाने विशाले लोचने किरतो नीलान् रश्मीन्। तत्र तत्र कोणेषु निगूढमन्धकारं परिहरन्तीव दन्तकान्तिदत्तबलाः शुभ्रहासगभस्तयः।

आसनं प्रदर्शितं तस्यै सम्राजोऽन्तरङ्गसचिवेन। उपविष्टा सा चेलाञ्चलेन मुखस्वेदं प्रमृज्य भगिनीपतिं राजानमवलोक्यैवमवादीत्- "प्रस्तुतदेशस्थितिमधिकृत्य राजसदसि किंचिन्निवेदयितुमिच्छामि।"

प्रद्योतनः – "कथयतु तत्रभवती यत् कथनीयम्।"

राजकाली – "भट्टारक! सम्प्रति महति कष्टे पतितो देशः। एकतो बाधते चोरो गजवीरः। अन्यतः पीडयति निर्दयप्रकृतिर्निशम्भुः।

उपेक्षते राजसदः ।

(भजगगैरानुष्टुभो वृत्तविशेषः)

११. अर्दयति दन्तिवीरो मर्दयति हा निशम्भुः ।
देशमसतां नियन्ता पातु कृपया स शम्भुः ॥

१२. अत्र विपदि प्रबुद्धा योगिवरमार्गसिद्धा ।
राजसदसो हितार्थं कीर्तयति कश्चिदर्थम् ॥

प्रद्योतनः - "स कोऽर्थः ? कीर्तयतु तत्रभवती । शृणुयाद्राजसदः ।"

राजकाली - "शृणु ; भट्टारक ! शृणु ।

१३. आनय निजात्मजातं संसृतिभयेन यातम् ।
शीतलगिरौ तपन्तं भूतलयशस्करं तम् ॥

१४. लालयतु सर्वदेशं चालयतु नीतिसूत्रम् ।
पालयतु धर्ममाद्यं कीलयतु दिक्षु भद्रम् ॥

१५. प्रेरयतु सर्वशक्तीर्मारयतु दुष्टजालम् ।
वारयतु बन्धुबाधां कारयतु राष्ट्रवृद्धिम् ॥

१६. शोधयतु देशतत्त्वं बोधयतु योगमार्गम् ।
साधयतु देवकार्यं साधुविनुतः स धीरः ॥

कतिपयक्षणान् राजसदः स्तब्धं भवति । अथाह राजा प्रद्योतनः - "तत्रभवति ! किमस्ति हिमाचले वत्सो विशाखः ?"

राजकाली - "अस्ति ।

(मात्रासमकम्)
१७. सोदरसदृशः परनारीणां
पावकसदृशः परवीराणाम् ।
राजति नृपते तनयो ज्यायान्
हिमवति विलसद्विनयः श्रेयान् ।।

द्रुतमिव चित्तं सम्राजो राजकाल्याः पद्यं श्रुत्वा । अनन्तरं स एवं पुनरप्राक्षीत् ।

"कथमिदं ज्ञातं तत्रभवत्या ?"

राजकाली - "कश्चिद्दैवज्ञशिरोमणिः पृष्ट आरूढचक्रं परीक्ष्य मह्यमेवमचकथत् । तस्मिन्दैवज्ञे ममास्ति भूयान्विश्वासः ।"

प्रद्योतनः - "कः स दैवज्ञशिरोमणिः ?"

राजकाली - "महाराज ! स ते द्वितीयमहिष्यास्तातः स ते राष्ट्रियस्य तातः । स युष्माकमुन्मत्तकवीश्वर्यास्तातः ।"

सोमनाथो मध्ये प्रविश्य - "यस्तत्र भवतीमुन्मत्तां वदेत्स उन्मत्तः ।

श्रोता तून्मत्तः क्रियते तत्रभवत्या आशुकवितया ।”

शिवनाथः - “सत्यम् ।”

प्रद्योतनः - (स्वगतम्) “सत्यमुन्मादककविता राजकाली । यां महामात्योऽपि श्लाघते ।” (प्रकाशम्) “तत्रभवति ! पूज्यपादस्य मुखान्निर्गतमक्षरशो मह्यं वक्तव्यमस्मिन्विषये ।”

राजकाली - “स उत्तरस्यां दिशीतो महति दूरे कुत्रचित्पर्वतसानौ तपश्चरन्वर्तते । इमानि पूज्यपादस्य मुखादुद्गतान्यक्षराणि ।”

प्रद्योतनः - (सत्यरथमवलोक्य) “किं भवानपि प्रश्नसमये निकटस्थः ?”

सत्यरथः - “अथकिम् । अद्यैव मध्याह्ने पृष्टं भगिन्या । उक्तश्च प्रश्नार्थस्तातपादैः । अत एव मया दृढस्वरेण सचिवस्यानुमानं खण्डितं गजवीरविषये ।”

प्रद्योतनः - (सोत्साहम्) “इयं शुभवार्ता देव्यै शीघ्रं प्रेषयितव्या ।”

राजकाली - “अहं भगिन्यै प्रथमं कथयित्वैवेहास्मि समागता ।”

सोमनाथः - “आर्ये ! अहमेकं पृच्छामि तत्रभवतीम् । कौ वा परन्तपोदयङ्करसङ्घनायकौ निशम्भुगजवीरौ ?”

राजकाली - “नाहं दिव्यदृष्टिमती ।”

सोमनाथः – "मा भूद्दिव्यदृष्टिमती । तथापि विशेषतो लोकवार्ताभिज्ञा । अतः पृच्छामि ।"

राजकाली – "अस्माकं पुरवासिनीनां पौरा एव लोकः । अत्र पौराणां धियस्त्रेधा भवन्ति ।"

प्रद्योतनः – (सकौतुकम्) "कथम् ?"

राजकाली – "राष्ट्रियस्य वीरमित्रगोष्ठ्यां राक्षसवीरबाहू निशम्भुगजवीरौ । हिरण्यनाभस्य व्यापरिमित्रगोष्ठ्यां वीरमल्लकालनाथौ निशम्भुगजवीरौ । फलिन्याः सङ्गीतमित्रगोष्ठ्यां कीर्तिवर्धनविशाखौ निशम्भुगजवीरौ ।"

सर्वे परस्परमवलोकयन्ति ।

प्रद्योतनः – "फलिन्याः सङ्गीतमित्रगोष्ठ्यां मुख्यं मित्रं श्रोतुमिच्छामि ।"

राजकाली – तदिह दृश्यमेव भ्राजते । भट्टारकस्यान्तरङ्गसचिवभूतमेव मित्रं फलिन्याः सङ्गीतमित्रेषु मुख्यम् । सोमनाथोऽधोमुखो भवति ।

शिवनाथः – "किमेतावानेव पौराण्यां सङ्ग्रहः ?"

राजकाली – "एतासु तिसृषु गोष्ठीषु सर्वं पुरं प्रतिबिम्बितं भवति।"

प्रद्योतनः – (सचिवमालोक्य) "भाव ! मन्ये देशान्तरादागता अपि फलिन्याः सङ्गीतमेकदा श्रुत्वैव गच्छन्ति ।"

सोमनाथः - (मुखमुन्नम्य सधैर्यम्) "अत्र पुरे श्रोतव्येषु फलिन्याः सङ्गीतम् । द्रष्टव्येषु भट्टारकस्य प्रमदोद्यानम् । एतदुभयमननुभूय न कोऽपि नूतनागतः पुरान्निर्गच्छेत् । फलिनी च न वेश्यावद्विलासाय गात्री । प्रतिशुक्रवासरं तत्र देवीभजनं भवति । तत्र गायति सा । तस्याः सङ्गीतमित्राणि च देवीभजनमित्राणीति वक्तव्यम् ।"

प्रद्योतनः - (राजकालीमवलोक्य) "सत्यरथाग्रजे ! बहुकृत्वो राजसदसि तत्र भवत्या समागतया मन्त्रिवन्मह्यं युक्ताः पन्थानः सूचिताः । अत्रापि मे सूचयतु तत्रभवती कमपि मार्गम् । येन दुष्टौ परन्तपोदयङ्करसङ्घौ तरेयम् ।"

राजकाली - "शृणु भट्टारक ! शृणु ।

१८. आनय निजात्मजातं शीतनगतः प्रपूतम् ।
धूतघनवैरिपाशं कर्तुमखिलं च देशम् ।।

१९. तातततनुजौ समेतौ वीक्ष्य मुदमेतु लोकः ।
साकमरिभिश्च देशे नाशमुपयातु शोकः ।।

२०. वीरमसुखप्रदेशादानय तमुच्चरक्तम् ।
विद्धि तमजेयमेकं वैरिविजयाय शक्तम् ।।

एतावदभिधायासनादुत्थाय राजानं नमस्कृत्य राजकाली त्वरितपदं निष्क्रान्ता । राज्ञश्चित्ते तु राजकाल्या द्विरभ्यस्तं वचो मनसि प्रत्युसमिवाभूत् - "आनय निजात्मजातम् ।"

त्रयोविंशं प्रकरणम्

## शृङ्गारनाटकम्

तस्यामेव रात्रौ भोजनादनन्तरं राजसेनाया अन्तःपुरमगाद्विश्वसारः । स गतासु तिसृषु रात्रिषु तां नालोकितवान् । अतस्तदा सा भामिनी स्वात्मानं विलोक्यैव ज्वलन्मुखी भवेदिति तस्य भयम् । तत्कोपापनोदनाय वाक्यजालमन्विष्यन्नेव सोऽन्तःपुरभवनं प्रविष्टः । तत्र तेन दृष्टाश्चेट्यो युवराज्ञी शयनशालायामेकाकिन्यस्तीत्यभाणिषुः । स परिक्रम्य मन्देन गमनेन भीतयेव दृष्ट्या स्तिमितेनेव श्वासेन शयनशालायामन्तः पदं न्यधात् ।

तत्र तेन सम्यगलङ्कृता महार्हे वाससी विचित्रं कञ्चुकं च बिभ्राणा मलयजदिग्धाङ्गीमृगमदरचिततिलका पुरुषप्रमाणे दर्पणे स्वात्मनः सौन्दर्यमवलोकयन्ती व्यलोकि कुमारदेवी । राजपुत्रस्तस्यास्तमपूर्वं वेषमालोक्य विस्मितः । तस्य चक्षुषोः सा शृङ्गारस्याधिदेवतेव मदनस्याग्रगामिनी शक्तिरिव संसारस्य सारसमुच्चय इव प्रत्यभासीत् ।

अकस्मादिव तमालोक्य राजसेना लज्जयेव ततः किञ्चिदपक्रान्ता । तथाप्यभिमुख्येव स्थिता । तस्याः पूर्वं यत्पराङ्मुखत्वं तस्य स्थाने सम्प्रति न तं मुखम् । पूर्वं ये निश्वसास्तेषां स्थाने सम्प्रति गुप्ताः कटाक्षाः । पूर्वं यो मुखे मुकुलीभावस्तस्य स्थाने सम्प्रतिविकासः । पूर्वं यत्कवचेनेवोत्तरीयेणाशिथिलमाच्छादनं तस्य स्थाने सम्प्रति

वक्षोदेशादेकतो गलितस्योत्तरीयस्योपेक्षणम् । तदेतत्सर्वमश्रद्धेयम् इवाभूद्विश्वसारस्य। अथवा स कथं न श्रद्दधातु प्रत्यक्षं पश्यन् । अनन्तरं स शनैः परिक्रम्य प्रियायाः सन्निकृष्टोऽभूत् । नापक्रान्ता सा । तदन्यच्छुभं लक्षणमदर्शिविश्वसारेण ।

"प्राणेश्वरि ! इति पेशलेन स्वरेणाहूतवान् राजकुमारः । उन्नमितमुख-कमला सा तमद्राक्षीत् । प्रसन्नैव दृष्टिः । न क्रोधारुणा यथा पूर्वम् । आर्द्रैव दृष्टिः । न शुष्का यथा पूर्वम् । प्रसारिण्येव दृष्टिः । न स्तब्धा यथापूर्वम् ।

विश्वसारः - "मगधयुवराज्ञि ! तवैष वेष उचितः । सम्प्रति भासि निजया भासा ।"

राजसेना - (स्वगतम्) "वेष एवायं मे । उचितश्च भवति कार्यवशात् ।"

सा प्रकाशं न किञ्चिदवादीत् । केवलमद्राक्षित्पुरोवर्तिनं मर्मप्रहारिभिः कटाक्षैः । ततो विश्वसारो ललाटचुम्बिनः कुटिलानलकानुत्सारयन् प्रियां भक्तुमारब्धवान् । स्वीकृतवती सा प्रसन्नेनेव हृदयेन तां सेवाम् । अनन्तरं तस्य पाणिरलकेभ्यो समवतीर्णः । द्वितीयः पाणिर्हारांत्समीकर्तुं प्रवृत्तः। अङ्गीकृतवती सा रागेणेव तां चेष्टाम् ।

विश्वसारः - "प्रिये ! किं ते प्रियं करवाणि ? शाधि माम् । अहमस्मि ते नियोज्यः ।"

राजसेना - (मन्दस्वरेण) "आर्यपुत्रस्य प्रीतितो न किञ्चिदस्ति मे

प्रियमन्यत्स्पृहणीयम् ।"

विश्वसारः - "प्रिये ! सूर्ये प्रभेव विश्वसारे राजसेनाप्रीतिः शाश्वती ।"

राजसेना - (स्वगतम्) "फणाधरे विषमिव विश्वसारे वितथं शाश्वतम् ।" (प्रकाशम्) "उपविशतु शय्यायामार्यपुत्रः ।"

विश्वसारः - "त्वयापि मदन्तिके शय्यायामुपवेष्टव्यम् ।"

उभौ गत्वा शय्यायामुपविशतः ।

विश्वसारः - (स्वगतम्) "मन्ये, इयं स्वकीयं मनोनिर्वेदं विसृष्टवती । हेमलतायाश्चेटचा उपदेशाः फलवन्तोऽभूवन्नेतावता कालेन ।"

अथ कमनीयवदनां प्रियां बाहुभ्यां परिरभ्य कपोले चिरमचुम्बीद्विश्वसारः । दिनत्रयात्पूर्वं या दहनज्वाला साऽद्य तस्य शरच्चन्द्रिकाऽभूत् । गाढमाश्लिष्यन्तं प्रसह्य चुम्बन्तं च तं राजसेना रक्तेनेव मनसा प्रत्यग्रहीत् । कमनीयतरमात्मनः शरीरं निर्वञ्चनं सा पत्ये समर्पितवती । विश्वसारोऽनुभवत्यनिर्वचनीयमानन्दं प्रेमपरिरम्भणजम् । तस्मिन्नालिङ्गनरसास्वादे चुम्बनानि तस्योपदंशकल्पान्यभूवन् ।

राजसेना तु तस्यै स्थूलं समर्प्य सूक्ष्मे शरिरे तद्दोषविमर्शनेन्धनैराभ्यन्तरं क्रोधानलं ज्वलयन्ती निजं कर्तव्यमेव चिन्तयन्त्यस्थात् । प्रत्युप्तानीव स्फुरन्ति तस्याश्चित्ते प्रतिज्ञाक्षराणि।

## चतुर्विंशं प्रकरणम्

# चिरात्समावेशः

तस्यामेव निशायां द्वितीयप्रहरावसाने निजभवनस्योद्याने राजकाली किमपि किमपि गायन्त्यचारीत् ।

तत्सोद्यानं भवनं राजकाल्याः पत्युर्वीरभद्रस्य । स पितुरेकः पुत्रः । पत्यौ क्वाप्यपयाते राजकाली तस्य विरहव्रतं दधाना तद्गृहेष्वेव वसति । विवाहादनन्तरं तौ दम्पती षण्मासानेव तत्र गृहे सुखिनौ व्यहरताम् । तदा वीरभद्रः साम्राज्यसैन्ये सहस्रपतिः । मासषट्कादनन्तरं महदङ्गमगधयुद्धं सम्प्राप्तम् । तत्र वीरभद्रो गत्वा यत्कर्माकरोत् । यथा तस्यायुधं नगधरमवधीत् यथा च स राज्ञा सत्यसेनेन विसृष्टस्तत्सर्वं पाठकानां प्रागेव विदितम् । स ततो गुप्तं गिरिव्रजमागत्य भार्यायै निष्कपटं सर्वं वृत्तान्तमकथयत् । तस्य प्रकटं मगधसैन्यं प्रवेष्टुं लज्जा निकृष्टपराजयावमानतप्तस्य प्रियां भार्यां विसृज्य यत्र क्वापि पलायितुं नास्ति शक्तिः । अतः स ईदृशमवालम्बत मार्गम् । तत्र सन्दर्भे भार्या यथा कथयेत्तथा कर्तुं तस्योद्देशः । वीरपत्न्यभिमानिनी राजकाली तु तं न प्रत्यगृह्णात्स्वागतेन । द्वावपराधौ तया भर्तर्यारोपितौ । श्रमेण रणाद्विश्रान्ते प्रमत्ते चाङ्गपतावायुधोत्सर्जनमेकोऽपराधः । अन्ततः प्रतिवीरं शरणं गत्वाऽपयानं द्वितीयः । "तपसा घोरेण यावत्तत्पातकं न शाम्येद्विलक्षणाद्भुतपराक्रमप्रदर्शनेन यावत्तदवमानं प्रक्षालितं न भवेत् तावद्भवतो मुखं न मह्यं प्रदर्शनीयम् ।" इति स्पष्टं भार्यया

तिरस्कृतो वीरभद्रस्तस्यामेव रात्रौ पुनः क्वापि गतः । तदारभ्याद्यापि वीरभद्रस्य वार्ता न ज्ञायते ।

प्रकृतमनुसरामः । तथाचरन्ती राजकाली तस्मिन्नुद्याने नानुभवति मन्दं मारुतम् । न वा कुसुमगन्धम् । चिन्तयति केवलं तीव्रेण मनसा चिरात्प्रोषितं भर्तारम् । तस्यां चिन्तायामिदं तत्संवादि पद्यं तस्याः कण्ठान्निर्गतम् । अनन्तरं तदेव सा भूयो भूयः पठन्ती पुनरचारीदितस्ततः ।

(पञ्चचामरः)

२१. "जितः परेण कन्दरां प्रवेष्टुमागतो हरि-
निकृष्टचेष्टितो व्यनिन्दि रुष्टया स्वकान्तया ।
वनान्तरं गतोऽधुना कथं दधाति जीवितं
वरेण्यकेसरी यथोत नीचजम्बुको यथा ।"

इमं पञ्चचामरं पश्चिमाभिमुख्यां गायन्त्यां राजकाल्यां पूर्वदिशातः कश्चिच्छब्दोऽभूत् ।

(शालिनीवृत्तम्)

२२. "प्रायश्चित्तं पातकस्यैष कृत्वा
युद्धे कञ्चिद्यातुधानं च जित्वा ।
शुद्धो भूत्वा दर्शयित्वा च वीर्यं
द्रष्टुं भार्यामागतस्तन्वि सिंहः ॥"

छन्दोमयं शब्दमेतमाकर्ण्य राजकाली निवृत्य पूर्वाभिमुखी प्रवृद्धमिव सालमुन्नतं किञ्चित्पिशङ्गीभूतसान्द्रजटाभारं सरसिजपत्राक्ष-

मानाभिलम्बिना प्रायो मेचकेन गहनेन श्मश्रुपटलेन प्रच्छादितविशाल-वक्षोदेशमाजानुलम्बि दृढबाहुमाहवनीयमग्निमिव तेजसा ज्वलन्तं पावनगम्भीरकृतिं कञ्चन पुरुषमद्राक्षीत् ।

प्रथमं सा स्वरेणैवाज्ञासीत्तम् । स्वरः सोऽर्धवर्षपरिचितोऽपि शतवर्षपरिचित इव गुप्तो हृदयपेटिकायां वर्तते । अथ सा कर्णाव-श्रद्दधाना नयनाभ्यां स्पष्टमलोकिष्ट। जटाश्मश्रुपटलौ विना सर्वं तदेव रूपम् । तदेवौन्नत्यम् । सैव च्छाया । सैव प्रसन्नगम्भीरा दृष्टिः । स एव नितान्तं विशदो हासः तदेवाविनम्रकायं स्थितम् । अस्ति कश्चिद्विशेषः । पूर्वो नयनमादकः सुन्दरः । अधुनातनो हृदयाकर्षको वर्चस्वी ।

राजकाली – "भगवन् ! कः स राक्षसो यो भगवता जितः ?"

पुरुषः – (स्वगतम्) "अस्याः सम्बोधनं कथयति महतीमन्तरङ्गभक्तिम् । अहमनया प्रत्यभिज्ञातो वा न वा । प्रत्यभिज्ञात एवास्मि नूनम् । श्लोकार्थे ज्ञाते कथमहमज्ञातः स्याम् ? हन्तः ! विंशतिर्वर्षाणि गतानि । एतावता कालेन च दृष्टे मयि नास्याः कश्चिद्विकारो लक्ष्यते ।" (प्रकाशम्) "प्राणेश्वरि ! काम्यकवनस्थः कापालिको नराशी परकालो नाम भयङ्करो राक्षसो मया निहतः ।"

राजकाली – "जितं कुशिकैः । येषां कुले राक्षसहा महावीरो जातः । भगवन् ! स्वागतं ते । आयातु भगवानन्तः । परिगृह्णातु किङ्कर्याः सेवाम् ।"

सम्प्रत्ययं पुरुषो राजकाल्याः पतिः कौशिको वीरभद्र इति पाठकानां

स्पष्टं विदितं भवेत् ।

वीरभद्रश्च भार्यायास्तैर्वचनैर्नितान्तं सन्तुष्टोऽभूत् । अथ स पुनरेवमप्राक्षीत् । "प्राणेश्वरि ! किं ते मानसमिदानीं स्वस्थम् ? मया श्रुतं त्वमुन्मत्ता बभूविथेति ।"

राजकाली - "भगवन् ! साधु खादामि सम्यक्परिदधामि । निर्दुष्टं वदामि । मम क उन्मादः ? भगवानेव परिशोधयतु मम वाक्येषु किमस्त्युन्मादलक्षणम् ?"

वीरभद्रः - "नास्ति । अन्यत्पृच्छामि । आर्यपुत्र पदं विहाय भगवत्पदेन करोषि यत्सम्बोधनं तत्र कस्ते भावः ?"

राजकाली - "अहं श्वशुरं न जाने । स आर्यो वा गुणैराहोस्विदन्यथा । स्त्रीणां पतिर्देवता । देवतानां भगवच्छब्देन खलु सम्बोधनं युक्तम् ।"

वीरभद्रः - "अस्मिन्नेवोद्याने मया सह बहुकृत्वः कृतविहारा त्वमन्या । तदा ते पतिरर्धाङ्गम् । तस्यां निशायां परुषवाग्दण्डप्रहारैर्मां निष्कासितवती त्वमन्या । तदा ते पतिर्निकृष्टः कश्चन श्वा । अद्य भगवच्छब्देन मां सम्बोधयन्ती त्वमन्या । इदानीं ते पतिर्देवता ।"

राजकाली - "कामिनी सा राजकाली यस्याः पतिरर्धाङ्गमासीत् । दुरभिमानवती सा राजकाली या पतिं परुषमध्यक्षिपत् । भक्तेयं राजकाली यस्याः पतिर्देवता भवति ।"

वीरभद्रः – "प्रिये ! स परुषोऽपि तवाधिक्षेपो मां गणनीयं पुरुषमकार्षीत् । सम्प्रत्यादिश शक्तं कान्तम् । स किं करोतु वीरपुरुषोचितं कर्म ? श्रूयते ते भगिनीपतेः शौनकस्य राष्ट्रं परन्तपैरुदङ्कैश्च लुण्ठ्यत इति । श्रूयते ते भ्राता महावीरः सत्यरथो महति तदुन्मूलनकार्यभारेऽवसक्त इति ।"

राजकाली – "अत्र वक्तव्यमस्ति बहु । अन्तरागच्छतु भगवान् ।"

इत्यभिधाय सा योगिनी कामिनीव पत्युः पाणिं गृहीत्वा तं भवनस्यान्तर्नीतवती । सा तदानीमस्मार्षीद्वा न वा तेषु मदना-राधनदिवसेषु तस्मिन्नेवोद्याने तेन सह सोल्लासं सलीलं सानन्दं सचित्रालापं सपार्श्वालिङ्गनं चिरं चरित्वाऽन्ततः पाणौ गृहीत्वा तस्यान्तर्नयनम् । स त्वस्मार्षीत् । धीरमपि तमाक्रान्तवान्कश्चिद्विकारः । तेन स्विन्नोऽभूत्तस्य पाणिः ।

सम्प्रति तौ दम्पती ज्वलद्दीपस्य भवनस्यान्तः । राजकाली प्रियस्य स्विन्नं करं विज्ञाय सस्मितं स्वोत्तरीयाञ्चलेन तं करस्वेदमपानैषीत् ।

पञ्चविंशं प्रकरणम्

## पुनर्विघटनम्

आत्मनो विकारमज्ञासीत्प्रियेति किञ्चिदलज्जिष्ट वीरभद्रः। ततः प्रियामालोक्य मन्दस्वरमेवमवादीत् - "प्रेयसि ! तव कमनीयस्य कोमलस्य बहुजन्मसुकृतलब्धस्य पाणेः स्पर्शेन मम शरीरे कश्चिदभूद्विकारः ।

राजकाली - "विग्रहे विकारोऽपरिहार्यः तत्र किं करोतु जितेन्द्रियोऽपि भगवान् ?"

वीरभद्रः - "ईदृशानि चमत्कारीणि वचनानि कुत्र वाऽन्यत्र श्रूयेरन् ?"

अनन्तरं राजकाल्या अनुरोधेन वीरभद्रः शय्यायामुपविष्टः । सैव राजकाली वीरभद्रविविधविहारसाक्षिणी शय्या । शय्याया अत्यन्तनिकटे वेत्रासने समुपविष्टा राजकाली । पुनरचालीत्सम्भाषणम् ।

राजकाली - "अद्य मम नयने श्रवणे च चरितार्थे । भगवन्तमद्राक्षम् । परकालवधमश्रौषम् तस्यां निशायां बालया यानि परुषाण्युक्तानि तानि क्षमतां भगवान् ।"

वीरभद्रः - "तान्यजस्रं पूजयाम्यहम् । तैरेवाहं मनुष्यः कृतः । प्रिये !

आदिश मे किमपि वीरपुरुषोचितं कर्म । बहुकालतप्तेन तपसा बहुकालकृतेन परिश्रमेण च शक्तिरेव मया सम्पादिता । तां सम्प्रदर्श्य क्षालयितुमिच्छामि स्वकीयं कलङ्कपङ्कम् ।"

राजकाली - "किं न जानाति भगवानुदयङ्करसङ्गमङ्गराजस्य पुनरुद्धारणाय प्रयतमानम् ?"

वीरभद्रः - "जानामि जनश्रुतितः ।"

राजकाली - "सत्यमेव तत् ! भगवन् !

(वसुमतीवृत्तम्)

२३. प्रादान्नरपतिर्यः प्राणमयि ते ।
पाणिं दिश निजं तस्मै गुणवते ॥

२४. धूता हितदले भीमो भुजबले ।
दीनार्थिभरणे कर्णो वितरणे ॥

२५. चापे निरुपमः पापेऽति भयवान् ।
रूपे दिविचरः कूपे पतितवान् ॥

२६. तस्मै सकरुणं विस्फारितगुणम् ।
विद्रावितपरं देह्युज्ज्वलकरम् ॥

२७. गर्ते पतितवान्मत्तो वनकरी ।
शक्त्योद्धरतु तं दृसः पुरकरी ॥

वीरभद्रः – "प्रिये ! आश्चर्यम् । किं त्वयोदयङ्करसङ्घ आशिषा वर्ध्यते ।"

राजकाली –"भगवतोऽग्रे किमपि नाच्छादनीयं मे । जानातु भगवाना-त्मनः प्रियैव तत्सङ्घभवननिर्माणस्य शङ्कुस्थापनमकार्षीदिति ।

वीरभद्रः – "अङ्गपतेः साहाय्यकदानं ममातीव प्रियम् । ततोऽपि प्रियाया इष्टपूरणम् ममादृष्टवशादुभयमेकक्रियासाध्यमभूत् ।

(राजकाल्याः पाणिं पाणिनाऽवपीडयन्) प्रेयसि ! यदिच्छासि ; गच्छाम्यस्यामेव रात्रावुदयङ्करसङ्घकार्यालयम् । कथय कुत्र तत् ? किं च देहि मह्यमभिज्ञानपत्रमेकम् ।"

राजकाली सम्भ्रमेणासनादुत्थाय पूजागारं गत्वा शीघ्रं पत्रमेकं विलिख्य सकर्पूरे कनकपात्रे न्यस्य तदादायागता ।"

वीरभद्रः – "किमिदं प्रिये, किमिदम् ?"

राजकाली – "पत्रं पश्यतु भगवान् ! अहं तु ज्वलयामि कर्पूरम् । एकक्रिया द्व्यर्थकरीति न्यायेन सन्निकृष्टो दीपो भवेदयं पत्रपठनाय । मम भगवत्पूजा च सिध्येदेकेन नीराजनोपचारेण।"

वीरभद्रः – "प्रिये ! किमिदमकाण्डपूजनम् ? यदाहं जयेनागन्तास्मि

तदा पूजय यथेष्टं सर्वैरुपचारैः ।"

राजकाली – "इदमपि जयेनागमनम् । भयङ्करं राक्षसं राक्षसादपि भयङ्करं मदनं च जित्वा भगवानागतः ।"

इत्यभिधाय पत्युर्हस्ते पत्रं समर्प्य सा कर्पूरं ज्वलयति । वीरभद्रः पत्रं पठितवान् । तद्राजकाल्या गजवीराय लिखितम् । पत्रपठनादनन्तरं राजकाली प्रियाय गजवीरस्य तात्कालिकं स्थानमचकथत् । अन्तत एवमवादीत् – "भगवन् ! इयमेव रात्रिर्युक्ता गजवीरस्थानं गन्तुम् । अस्मिन्दिने नगरपालो विष्णुशर्मा ग्रामान्तरं गतः । नास्ति राजधान्याम् । प्रासादात्प्रतिनिवृत्तो मम भ्राता च गृहेष्वेव वर्तते श्वो निर्वर्तनीये गुरुजयन्त्युत्सवे कर्तव्यकलापमालोचयति सहविषमसिद्धिप्रभृतिभिः । इतरे श्वानः कुशिकसिंहनिग्रहणायापर्याप्ताः । प्रथमं तेषां नयनान्येव दुर्बलानि । यदि यदृच्छया किमपि नयनं पश्येत्कार्यं साधयितुं नास्ति भुजसारः ।"

सर्वं श्रुतवान्वीरभद्रः । सम्प्रति पात्रे शान्ता नीराजनज्वाला वीरभद्रस्याविक्षदिव मुखम् ।

अथाह – "प्रिये ! सम्प्रत्येवायमहं गच्छाम्युदयङ्करसङ्घकार्यालयम् ।"

राजकाली – (पुनरपि कर्पूरं ज्वलयित्वा)

(रजगैरौष्णिहोवृत्तविशेषः)

11

२८. ''पण्डिताय सद्गुणैर्मण्डिताय धन्विने ।
राजकालिकामनो नायकाय मङ्गलम् ।।

२९. ''मर्दनाय दुर्धियां वर्धनाय सद्धियाम् ।
कालिकाविलोचनाप्यायनाय मङ्गलम् ।

३०. यत्र वीरमण्डली तत्र भूरि राजते ।
राजयोगिनीशिरो वन्दिताय मङ्गलम् ।।

३१. कल्यकालिकेन्दिरामन्दिराभचक्षुषे ।
भासुराय विद्यया भूसुराय मङ्गलम् ।।

३२. देशिकात्मजामनोहर्म्यमध्यचारिणे ।
देशमित्रपार्थिवोद्धारकाय मङ्गलम् ।।

३३. रक्ष रक्षकं सतां धर्मपालकं सदा ।
सत्यसेनमात्मनः प्राणदायकं मुदा ।।

इति मङ्गलगानं कृतवती ।

वीरभद्रः शयनादुत्थितः । तेन वीरयोगिना सम्प्रति नूतनः कार्यभारः शिरसा धृतः । वल्लभामङ्गलगानवर्धितस्य तस्य बलं शतगुणमभूत् । राजकाली शान्तज्वालं नीराजनपात्रमासने निक्षिप्यासेविष्ट पत्युः पार्श्वम् ।

तदा वीरभद्रो निर्वचनं प्रेमाविष्टः पावनरमणीयं प्राणेश्वरीं गाढमालिङ्गितवान् ।

ईश्वरकरुणाप्रवाहमध्य इव तद्भुजपञ्जरमध्येस्थिताक्षणं विवशा सर्वं व्यस्मार्षीदिव राजकाली । तदा प्रत्यक्षमन्वभूत्सा रागादपि भक्तिरेव रसवत्तरेति । वीरभद्रस्तु तस्मिन्नालिङ्गने परमां विश्रान्तिमिवान्वभूत् । वर्षपूगाचरितानां व्रतानां श्रमः सर्वोऽपि तस्य व्यपगतः । बहुकालाचरितस्य तपसः फलं राशीभूत्यैकदा तस्य मिलितमिवाभूत् । केवलं परस्परगात्रस्पर्शस्य नैतावन्महिमा । तदुज्जृम्भितावुभयोः परिशुद्धौ प्रेमझरावेव तावाक्रम्येदृशं कर्मातानिष्टाम् ।

गताः कतिपये क्षणाः । उभाभ्यां युगपत्कार्यं स्मृतम् । शनैरिव तावालिङ्गनबन्धाद्विघटितौ । "गच्छामि प्रिये, गच्छामि ।" इति वीरभद्रोऽभ्यधात् । "जयाय गच्छतु भगवान्" इति राजकाल्यवादीत् ।

प्रस्थितः पत्रमादाय वीरभद्रः । तमन्वव्राजीदाभवनद्वारं राजकाली । तस्मिन्निष्क्रान्तेऽपि सा सालभञ्जिकेव निश्चला द्वारे कतिपयक्षणान् अस्थात् । एवं तौ दम्पती चिरान्मिलितौ पुनर्विघटितौ । पूर्वं विघटनप्रकारोऽन्यः । एष परिशुद्धप्रेमाध्यायः ।

इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतेः कृतौ पूर्णायां महाकथायां प्रथमो भागः समाप्तः ॥

# पूर्णा

## द्वितीयो भागः

### प्रथमं प्रकरणम्

### वीरभद्रस्य रङ्गे प्रवेशः

तस्याश्चैत्रशुक्लैकादश्याश्चन्द्रास्तमयात्प्रागेव वीरभद्रो उदयङ्करसंङ्घ-कार्यालयं गतः । अनन्तरायमेव चलितं तस्य गमनम् । त्रिषु स्थलेषु त्रयो रक्षिपुरुषास्तेन दृष्टाः। उपविश्यैव निद्रां देवीमाराधयन्नेकः । मदिरामदातिरेकादात्मानमेव धारयितुमशक्त इतस्ततस्स्खलद्भिः पदैः परिभ्रमन्नपरः । निद्राक्रान्तं मुखमितस्ततः प्रकर्तुमशक्तो दिगन्तराभिमुखोऽन्यः, स्थलयोरुभयोरुभौ श्वानावभषिष्टाम् । इयमल्पान्तरायसामग्री दौर्बल्यादकिञ्चित्कर्यभूत् ।

सोऽग्रहारः कश्चित् । नामतो यागवाटिका तत्र हारीतस्य सुबन्धोर्गृहं वीरभद्रः प्राविक्षदतिथये भद्रको नाम सुबन्धोः प्रेष्यो गृहद्वारमुद्घाटितवान् । वीरभद्रेण प्रविष्टा प्रथमा गोशाला । तत्रैकत उन्नतायां वेदिकायां भद्रकस्यास्ति कटशय्या । कश्चिदत्यल्पज्वालो ज्वलति दीपः ।

भद्रको वीरभद्रं पृष्टवान् । – "आर्य ! को भवानिति ।

वीरभद्रः – "अहमस्मि धर्मस्य दासः । अधर्मस्य वैरी ।"

स्थानकथनसमये राजकाल्या तदेतत्सङ्केतवचनं चोक्तं वीरभद्राय । तस्यार्थो भद्रकेण ज्ञातः । स निद्राणं यजमानं प्रबोध्य तस्मै नूतनं विशिष्टमतिथिं न्यवीविदत् । सुबन्धुर्वीरभद्रं गौरवेणान्तः प्रवेश्य "किं भवतः कार्यम् ?" इत्यप्राक्षीत् ।

वीरभद्रः - "अहं नायकं द्रष्टुमिच्छामि ।"

सुबन्धुः - "को भवन्तमिह प्रेषितवान् ?"

वीरभद्रः - "तत्र भवती राजकाली ।"

अथ सुबन्धुः कुटीमेकां नीतवान्वीरभद्रम् । तत्र सम्प्रत्युपविष्ट एव वर्तते कमपीष्टं मन्त्रं जपन्नुदयङ्करसङ्घनायकः।

सुबन्धुः - "प्रभो ! भगवती राजकाली कमपि प्रेषितवती प्रभुणा सह किमपि सम्भाषितुम् ।"

गजवीरः - "स्वागतं तस्मै यं प्रेषितवती भगवती । अहमस्मि कृतक्षणः । आगच्छतु तत्र भवान् ।"

अथ सुबन्धुर्वीरभद्राय गजवीरं प्रदर्श्य ततो निष्क्रान्तः । तत्रैको ज्वलति मध्यमज्वाल एरण्डतैलदीपः । वीरभद्रश्च तस्मिन्दीपप्रकाशे कुट्याः पश्चिमभित्तिनिकटे सामान्यकटे समुपविष्टं महावराहमिव पुष्टं दिग्दन्तावलमिव बलवन्तं दुर्गावाहनसिंहमिव जवसत्ववन्तं नामश्रवणेनापि वैरिणां हृदयानि चालयन्तं भूरि बाहुबलानां रक्षिजनानां

निजकूटग्रहणाशया सह गर्वं समूलमुन्मूलयन्तं प्रीत्येव सविनयम् उपस्थितां धीरतां ज्वलन्त्या दृशा लालयन्तं भक्त्येव सप्रश्रयमाश्रयमाणां गम्भीरतां कयाचिन्मुखमुद्रया पालयन्तं यमवाहनमहिषमिव दर्शनमात्रेणापि भयानकरसस्योत्पादयितारं रुद्रावतारशरभमिव दृष्टिमात्रेणापि रौद्ररसस्य प्रदर्शयितारं महावीरमारुतिमिव श्वासैरपि वीररसस्य प्रवर्धयितारं विजृम्भमाण त्रिविक्रममिव सान्निध्यमात्रेणाप्यद्भुतरसस्य पोषयितारं शब्दतोऽपि भयमनवगच्छन्तं नामतोऽपि शोकमजानन्तं पादान्तिके शयानयापि जागरूकया शात्रवभयदया लोहगदया प्रिययेव समुपास्यमानं कटिलग्नेन तीव्रधारेण करवालेन प्रीतिमता बालेनेव परिरभ्यमाणं नातिदीर्घेणापि गहनेन श्मश्रुपटलेन विभ्राजमानं मत्तगजैरप्यभेद्यं महादुर्गलोहकवाटमतिशयानेन वक्षोदेशेन विराजमानं महागणपतिशुण्डयेव भजकाभयप्रदया दक्षिणभुजया कृतान्तदण्डेनेव सपत्नमदभञ्जनेन वामबाहुना च शोभमानं न केवलं वीराणां सूरीणामप्यग्रण्यं निरुपमानपुण्यं शैलमिवाप्रकम्प्यं समुद्रमिव दुराधर्षं भूतमिव महात्राणं राक्षसमिव वैरिकम्पनं निर्जरमिव महानुभावं विशालभावं वासवगजावदातशरीरं गजवीरं वीक्षितवान् ।

गजवीरो गौरवेण वीरभद्राय स्वकीय एव कटे समुपवेष्टुं स्थलं प्रदर्शितवान् । तत्रोपविष्टश्च वीरभद्रो राजकाल्याः पत्रं गजवीरस्य हस्ते समर्पितवान् । गजवीरस्तत्पत्रमादरेण गृहीत्वा वाचयति । -

(राजकाल्याः पत्रम्)

उदयङ्कराणां प्रभो ! अयं पत्रस्याहर्ता युष्माकं राजकाल्याः प्रियो भर्ता । सम्प्रतितपसा ब्रह्मचर्येण परिश्रमेण च संस्कृतः पुरुषः । शक्तो महान्तं

भारं वोढुम् । कष्टानि च सोढुम् । प्रभुर्बहूननुयायिनो नेतुम् । दुर्जयानरीनपि जेतुम् । भट्टारकेण दत्तान्प्राणान्पुनर्भट्टारकस्य सेवायै विनियोक्तुम् इच्छति । तमिममपारसारं कुशिकानां वीरं शुनकानां दर्पभञ्जन-कर्मण्युपयोक्तुमर्हन्त्युदयङ्कराः ।

इति वो राजकाली ।"

पत्रमालोक्य तस्मिन्नेव क्षणे गजवीरो वीरभद्रमुदयङ्करेषु स्वीकृतवान् । नियमपालनप्रतिज्ञादिस्तदङ्गकार्यकलापो यथाविधि चलितः ।

द्वितीयं प्रकरणम्

## सङ्घमधिकृत्य सम्भाषणम्

वीरभद्रः – "प्रभो ! बलवत्तमात्सार्वभौमादङ्गराष्ट्रमाच्छिद्य हर्तुं क इव मार्गोऽवलम्बितः सङ्घेन ?"

गजवीरः – "आर्य ! अन्ततः प्रकटं युद्धमेव कर्तुं सिद्धः सङ्घः । तत्र भवान्महामन्त्री सुमतिस्तदर्थमङ्गराष्ट्रे सञ्चिनोति वीरपुरुषान् । अङ्गराष्ट्ररक्षणाय प्रद्योतनेनाङ्गेषु निक्षिप्तं सैन्यं दशसहस्राणि योधाः । तदर्थमेवात्र स्थितं च सैन्यं तावदेव प्रमाणतः । वयं यदि पञ्चदशभिः सहस्रैरभियोक्ष्यामस्तदाऽस्माकं विजयो भवितेति ध्रुवम् ।"

वीरभद्रः – "साम्राज्यसैन्यं चाङ्गराष्ट्ररक्षणाय सार्वभौमो विनियोक्ष्यति चेत्तदा भारः स्यादस्माकम् ।"

गजवीरः – "साम्राज्यसैन्ये बहुलं जितेषु राष्ट्रेषु रक्षणाय वर्तते । तदा नयति चेत्तेषां राष्ट्राणां हानिः । यद्राजधान्यां सैन्यं विद्यते तदर्धलक्षमितं भवति । तत्रार्धं राजधानीरक्षणाय नित्यमावश्यकम् । एषु दिवसेषु परिशिष्टमर्धं च न प्रेषयितुं समर्थः सम्राट् । एकतः परन्तपेभ्यो भयम् । अन्यतो धनाभावश्च तत्र कारणे । यदि प्रेषयेद्वानरयुद्धेन तान् बाधिष्यामहे ।"

वीरभद्रः – "किं मगधपतेर्धनाभावः ? आश्चर्यम् ।"

गजवीरः – "साहसेन राजकीयः कोश एव लुण्ठितोऽस्माभिः । तत्र मिलिता अस्माकं दशलक्षं सुवर्णाः । नैतावता वयमुपरताः । पुनरेकदा राजकीयं कोशमेव लुण्ठितुं प्रयतामहे । अनन्तरं तस्य कर्मणो युद्धमारभ्येत ।"

वीरभद्रः – "साम्राज्यवासिनां श्रीमतां च धनानि तत्र तत्रोदङ्कैर्लुण्ठ्यत इति जनवादः । स किमसत्यः ?"

गजवीरः – "अन्धानां जनानां स वादः । किं सत्यसेनभट्टारकस्यानुचराः निरपराधानां सामान्यप्रजानां धनं चोरवदपहरेयुः ?"

वीरभद्रः – "प्रियं मे प्रियं मे । यदापद्यपि न धर्मविरुद्धमुदयङ्कैः क्रियते ।"

गजवीरः – "केचिच्चोराः न जाने परन्तपा इतरे वा सामान्यप्रजानां धनं तत्र तत्रापहरन्तो मन्नामाङ्कानि निजाद्भुतकर्मप्रकटनपत्राणि लिखित्वा किल चौर्यप्रदेशेषु विसृजन्ति । तदेवास्माकमपवादस्य मूलम् । रक्षिणां नयनेषु धूलिप्रक्षेपणाय ते चोरास्तथा कुर्वन्तीति मन्ये । अपवादाद्भवतु नामापकीर्तिः । तथापि न पापम् । प्रत्युत तेन यत्किञ्चिद्वर्तमानमन्यत्पापं च प्रक्षाल्येत । यदाहुः । –

अतिथिश्चापवादी च द्वावेतौ मम बान्धवौ ।
अपवादी हरेत्पापमतिथिः स्वर्गदायकः ।।

वीरभद्रः - “सम्प्रति महामन्त्रिणा कतिवीरपुरुषाः प्राणनिरपेक्षं योद्धुं सिद्धाः सम्पादिताः ?”

गजवीरः - “यावदुद्देशं वीरपुरुषसम्पादनं समाप्तम् । नेतरास्तु समर्थाः पञ्चभ्योऽनवमा अपेक्षिताः । इतः प्राक्सन्ति त्रयः ।(सस्मितम्) अस्यां निशायामेको मिलितः । अन्योऽन्वेषणीयः ।”

वीरभद्रः - “मन्ये ; प्रभुं विनैवेदं नेतॄणां सङ्ख्यानम् ।”

गजवीरः - (शान्तस्वरेण) “अथकिम् ।”

वीरभद्रः - “अहमधुना किं कार्यं करवाणि ?”

गजवीरः - “राजकीयकोशलुण्ठनसमये भवता साहाय्यकं कर्तव्यं प्रथमम् । अनन्तरं निर्वर्त्ये सङ्ग्रामे त्रिसहस्रयोधात्मकमेकं दलं नेतव्यम् । सम्प्रति भवता मया सह तपस्तपता क्षेप्तव्यः कालः।”

वीरभद्रः - “सर्वथाऽहं सिद्धो यत् किञ्चिदपि कर्तुं यथा प्रभुराज्ञापयति ।”

इत्यन्यच्च विविधं तयोः सम्भाषमाणयोः सा रात्रिर्व्यतीता । वीरभद्रस्य सा रात्रिः शिवरात्रिरभूत् । तस्य जीवितयात्रायामेव सा गणनीया रात्रिः । तस्य यशसः सा प्रारम्भरात्रिः । तस्य राजकीयजीवितस्य सा पुनरुद्धारकरात्रिः ।

राजकाली तु भर्तुर्गमनादनन्तरं तस्मिन् रात्रिशेषे कृत्यकृत्येवासेविष्ट

सुखनिद्राम् ।

प्रद्योतनस्तु राजकालीगमनादनन्तरमपि मन्त्रिभिर्विविधमालोच्य सर्वप्रयत्नैः सङ्घद्वयध्वंसनाय कृतनिश्चयोऽन्तःपुरमगात् । चिन्ताक्रान्तस्य तस्य निद्राऽभूदल्पा । सापि दुःस्वप्नवती । उत्थितः स एकदा निजमङ्गराष्ट्राक्रमणवृत्तान्तमस्मार्षीत् । विद्युदिव क्षणं तत्पापमिति स्फूर्तिरभूत् । पुनरन्धकारेणावृतं मनः । साम्राज्यतृष्णाबलदर्पश्च भूयो लोचनयोः पुरोऽभवताम् ।

तृतीयं प्रकरणम्

## गुरोर्जयन्त्युत्सवसन्देशः

चैत्रशुद्धद्वादशी श्रीनाथभट्टपादानां जन्मदिवसः । तस्मिन्दिने प्रातर्गुरोश्चरणपूजां परया भक्त्या शिष्याः प्रसिद्धा अचीचलन् । स्वयं सार्वभौमोऽप्यागत्य पूर्वाह्णे दर्शनं कृत्वा गतः ।

मध्याह्ने महद्ब्राह्मणसन्तर्पणं चलितम् । पट्टणे न सोऽस्ति ब्राह्मणप्रमुखः यस्तस्मिन्नुत्सवे भागस्वामी नाभूत् "स्त्रीणां च भोजनादनन्तरं गुरोः सन्देशं श्रोतुं काचित्सभासमावेशिता तदर्थमारचिते विशाले भवनाङ्गणमण्डपे।

तत्र सुनिर्मितायामुन्नतायां पृथग्वेदिकायां सम्यगास्तीर्णरत्नकम्बलायां कुशास्तरणस्योपरि व्याघ्राजिने पृष्ठतः पार्श्वतश्चदुकूलोपधानयुक्ते तत्रभवानुपविष्टो देशिकः शुभदर्शनो मूर्तिमानिव प्रसादः। वयसि व्यतीतसहस्राधिकमासोऽप्यविकलसर्वेन्द्रियः। आकर्णपलितः। अपतितदन्तः । बहुलरहस्यस्य शाक्तसम्प्रदायस्य प्रवर्तक आचार्यः । पशुवीरदिव्याभिधानभावत्रयमर्मज्ञः । षट्चक्रसमुल्लासविधिवेदी उज्जृम्भितकुण्डलिनीशक्तिः सिद्धः । वेदवेदान्तमर्मवेदी श्रोत्रियः ।

देशिकस्य पार्श्वे तस्य तपःसखी । सुशीलादेव्युपविष्टा । दशवर्षावरा भर्तुः शुक्लीभूतशिरोजाप्यनुज्झितलावण्यकला । चन्द्रकलेव प्रसन्ना ।

आहवनीयज्वालेव पावनी । वदनप्रसादप्रतिबिम्बितसौम्यस्वभावा । लोचनकलोद्वान्तागमरहस्या । क्रोधकथाया अपि दवीयसी । नित्यानपेतकरुणाशुद्धा प्रीतिरिव मूर्तिमती ।

सार्वभौमं वीरभद्रं च विहाय सर्वे जामातार उपस्थिताः सभायाम् । महामन्त्रिणं शिवनाथं विहाय प्रायो राजपुरुषप्रमुखाः सर्वे तत्रोपस्थिताः । सुमित्रभवशर्मविशालाक्षप्रभृतयश्च प्रसिद्धनामानः शिष्याः । अन्ये च धनमित्रहिरण्यनाभप्रभृतयः पौरप्रमुखाः ।

स्त्रीषु दुहितरः सर्वा सन्निकृष्टा अभूवन् । अपराजिता विशोका वीरिणी चेति तिस्रः परिव्राजिकास्तत्रोपस्थिताः । तासु वीरिण्याः सौन्दर्य-विरोधिमुखम् । अन्धकारपङ्करूषितानीव गात्राणि । ज्वलतः केवलं लोचने । विशदाः केवलं दन्तभासः । इयं जयन्त्युत्सवाय दविष्ठात्प्रदेशात् किलागता । राणायनस्य सर्वाश्च युवतयः शिष्यास्तत्रोपस्थिताः । अस्माकं पूर्णा च सहपितृष्वस्रा कमलाक्ष्या तत्र सन्निकृष्टाऽभूत् । इतराश्चोपस्थिताः पौरप्रमुखस्त्रियः ।

युवतिषु कासाञ्चिद्गात्राणि मल्लिकाधवलानि कासाञ्चिद्वपूंषि चाम्पेयगौराणि । कासाञ्चिदङ्गानि कमलपाटलानि । कासाञ्चिच्छरीराणि बन्धूकारुणानि । कासाञ्चित्कायानि नीलोत्पलश्यामानि । ताभिरेकत्र मिलिताभिः पुष्पमालाविपणिरिवाशोभिष्ट सा सभा । न केवलं गिरिव्रजस्य न वा केवलमगधराष्ट्रस्य किन्तु भूलोकस्यैव रामणीयकमेकत्र मिलितमिवादर्शि तत्र सभायाम् ।

तासु काश्चिदत्युज्ज्वलवेषाः कश्चिद्यथोचितरमणीयवेषाः ।

कश्चिन्निराडम्बरप्रसन्नवेषाः । मालिन्यं तु तस्मात्तरुणीकूटाद्योजनमात्रदूरे । तासु कन्यासर्वापि कालसर्पाभवेणी । गृहिणीसर्वापि भ्रमरपुञ्जानुकारि-धम्मिल्ला ।

सभायां पुंसां स्त्रीणां च यथोचितं परिकल्पितान्यासनानि। दक्षिणतः पुंसाम् वामतो नारीणाम् । पूर्वमर्धं प्रदीप्तप्राभवम् । उत्तरमर्धं प्रकृष्टरामणीयकम् ।

उत्तरार्धे राजकाल्याः समीपे समुपविष्टाः सप्तचैका युवतयः पाठकै-र्लक्षीकर्तव्याः । सप्त राणायनस्य शिष्याः । एका विशालाक्षस्य ।

(१) राजकाल्याः पार्श्वे समुपविष्टा दक्षिणापथसम्राजः सुचन्द्रस्य पुत्री मधुमती । तस्याः परमं सौन्दर्यमङ्गेभ्यः सर्वेभ्यो विभक्तमप्येकैकस्मै विश्वातिशाय्येव मिलितम् । तस्या एकं नित्यस्मेरमधुरवदनसौन्दर्यमपि क्रेतुं कमलालया सर्वा च लक्ष्मीः पर्याप्ता न स्यात् ।

(२) मधुमत्याः पार्श्वे राणायनस्य पुत्री मनोरमोपविष्टा । तस्याः शरीरप्रभा निर्मला । नित्यप्रसन्नवदनचन्द्रचन्द्रातपोहासोऽपि निर्मलः । सा यथा नितान्तं सुन्दरी तथा विशेषतः सुकुमारी । तया नित्यस्मयमानमुखचन्द्रया प्रक्षाल्यन्त इव दिशः । स्वच्छीक्रियत इव तत्सदः । अस्यामुत्तमसुन्दर्यां लब्धास्पदं यौवनं चरितार्थमिवाभूत् ।

(३) मनोरमायाः पार्श्वे सामन्तरिपुञ्जयस्य पुत्री सुलक्षणोपविष्टा । इयमपि धवलप्रभैव नायिका । अस्याः कमनीये मुखपुण्डरीके प्रसादादपि माधुर्यमधिकम्। स्मितेषु वैमल्यादप्यालस्यं प्रधानम् ।

(४) सुलक्षणायाः पार्श्वे जम्बुकस्य पुत्री विलासवत्युपविष्टा । इयं सार्थकनामा मदनपवनसञ्चालितैर्विलासतरङ्गैः । तस्यां चलन्त्यां सम्भाषमाणायां हसन्त्यां प्रेक्षमाणायां वा सज्यकार्मुकः कामदेवस्तत्र सन्निकृष्टो भवेत् । तस्याः प्रकृष्टं सौन्दर्यं च विलासानां विशिष्टं ददात्याकर्षकत्वम् ।

(५) विलासवत्याः पार्श्वे हिरण्यनाभस्य पुत्री कनकवल्ली समुपविष्टा । कनकवल्ल्यैव जङ्गमा कनकवल्ली । विषदिग्धाः कामबाणास्तस्याः शाताः कटाक्षाः । कामस्य सम्मोहनचूर्णमुष्टिप्रक्षेपास्तस्या अलसानि स्मितानि । तस्याः सहजमुत्तमं सौन्दर्यं महार्हवस्त्रकञ्चुकाभरणैर्द्विगुणीकृतं प्रदर्श्यते।

(६) कनकवल्ल्याः पार्श्वे भवशर्मणः पुत्री चन्द्रप्रभोपविष्टा । अस्याः सुन्दरीमणेर्वदनपुण्डरीकेण चक्षुर्नीलोत्पलाभ्यां मन्दहासमल्लिकया च सायकीप्रसूनसायकः । इयं नातिपरिचितविलासाप्यतिप्रशस्तरूपा । ऋजुप्रसन्नयोरस्याः सुविशालयोर्नयनयोर्विभक्तात्मसर्वविभवेव लक्ष्मीः ।

(७) चन्द्रप्रभायाः पार्श्वे नगधरस्य पुत्री फलिन्युपविष्टा । नीलोत्पल-श्यामलाया अस्याः सौन्दर्यं सर्वजनाकर्षकम् । रसवन्तो विलासाः । भुवनसम्मोहिनी गान्धर्वकला ।

(८) फलिन्याः पार्श्वे विशालाक्षस्य पुत्री पूर्णोपविष्टा । इयं लक्षणानामेकं विश्रान्तिस्थानम् । लावण्यस्याभिमानस्थलम् । सुन्दरीसर्गे निजसर्गवैभवस्य परमावधिं दर्शयितुं प्रजापतिना महता प्रयत्नेन निर्मिताव्यक्तिः । अधिदेवता धवलस्य ज्योतिषः । शुम्भसंहारिणीव

विशेषतस्त्राणवती । यथा प्रसन्ना तथा मधुरा।

स्तब्धेव सर्वतो मौनेन निस्तरङ्गा सभा । तदा देशिको निजममूल्यं सन्देशं मितेनोपन्यासेन सदसे प्रादात् -

"वत्साः ! सर्वेषां भुवनानां चालयित्री पराशक्तिः । सा सर्वेभ्यो भुवनेभ्यः परस्ताद्विराजते । भुवनेषु च भ्राजते । भुवनातीतां सदाशिवामाहुः । अत्र दृश्ये तस्याश्चत्वारि शरीराणि। आकाशं प्रथमं शरीरम् । तदुपाधिरीश्वरी । सर्वस्य जगतः सम्राज्ञी । सूर्यमण्डलं द्वितीयं शरीरम् । तदुपाधिर्गायत्री । सवित्री प्राणिनाम् । भूमण्डलं तृतीयं शरीरम् । तदुपाधिर्लक्ष्मीः । धारिणी प्राणिनाम् । चन्द्रमण्डलं चतुर्थं शरीरम् । तदुपाधिः काली । संहारिणी प्राणिनाम् । इत्यधिदैवतम् ।

अथाध्यात्मम् । निर्विकल्पे समाधौ परिशिष्टा शुद्धा चिदेव सदाशिवा । सविकल्पे समाधौ दहराकाशसञ्चारिणी कुण्डलिनीशक्तिरीश्वरी । वाग्गायत्री । मनो लक्ष्मीः । प्राणः काली ।

प्राणस्य गत्यागतिनिरीक्षणेन कालीमुपासीत । तेन सिद्धेन प्राणो ज्योतिर्मयो भवेत् । सङ्कल्पतरङ्गनिरीक्षणेन लक्ष्मीमुपासीत । तेन सिद्धेन मनो धूतसङ्कल्पं भवेत् । सूक्ष्मस्वरानुसन्धानेन गायत्रीमुपासीत । तदानीमाभ्यन्तरः शब्दो ज्योतिर्मयो भवेत् । ध्रुवया स्मृत्येश्वरीमुपासीत । तेन सर्वग्रन्थिमोक्षो भवेत् । सहजया निष्ठया सदाशिवामुपासीत । तेनात्मा ब्रह्मभूतो भवेत् । अयं मे शिष्यान्प्रति सन्देशः ।"

स महोपदेशभूतो गुरोर्जयन्त्युत्सवसन्देशः प्रायः सर्वेषां मनांसि

देवताभिमुखान्यकार्षीत् । इतः प्रागेव देवताभिमुखानि मनांसि देवतालग्नाकार्षीत् । इतः प्रागेव देवतालग्नानि मनांसि देवतामयान्यकार्षीत् ।

चतुर्थं प्रकरणम्

## कवित्वपरीक्षा

गुरोः सन्देशप्रदानकाल एव ब्रह्ममठादागता भ्रामरी सभां प्राविक्षत् । दैवात्तत्कालागातयाः देवरक्षितताया औषधोपचारैः किञ्चित्स्वस्था सुनन्दिनी देवरक्षितैव मध्याह्नभोजनादनन्तरं तव मातरमहं द्रक्ष्यामीत्यभिधायोत्सवदर्शनलोलां भ्रामरीं गिरिव्रजाय प्रेषितवती । भ्रामरी च त्वरितगमनेनागत्य समये सभां प्रापत् । सम्पूर्णे तस्मिंत्सदसि क्वापि कोणे समुपविष्टा ।

भ्रामरी मन्दलज्जा कन्या । अपृष्टाप्यप्रेरितापि वक्तव्यं वक्तुं साहसिनी । समाप्ते परमगुरोरुपन्यासे समुत्थायात्मना विरचितमिदं पद्यं मयूरकेकानुकारिणा सभाश्रवणाकर्षकेण स्वरेणापाठीत् ।

रविरपि यद्भुवनत्रयदीपकदिव्यलसत्किरणो
विधुरपि विष्टपतर्पणदीधितिरीश्वरमौलिमणिः ।
तिमिरमशेषजनेषु महागहनं हृदयान्तरगं
प्रभवति नैव निवारयितुं तदहो निहतं गुरुणा ।।

तद्गीयमानं पद्यमभिसभायाः श्रवणैः सह लोचनानि चाधाविषुः । अद्राक्षस्तानि पद्यस्य गात्रीं पयोदश्यामगात्रीं निराडम्बरवेषां कामपि सुयोषाम् । अधुनापि तस्याः स्वेदो मार्गश्रमजो नापगतो मुखे ।

बहुलोऽस्ति वसनलग्नो मार्गधूलिः । नास्ति विशेषतो वर्णनीयं सौन्दर्यं तस्याम् । न सन्ति रूपवर्धकान्याभरणानि । तथापि तस्मिंत्समये सा सर्वां सभामाकृक्षत् ।

"का सा भद्रमुखी कन्या ?" इत्यप्राक्षीद्देशिकः ।

"भगवन् ! अस्माकं पण्डितवरकर्मणः पुत्री भ्रामरी ।" इति सुमित्रः प्रत्युत्तरमदात् ।

श्रीनाथः – "किं वरकर्मणः पुत्री ? स्वर्गतोऽपि पुत्रीन्यस्तविद्यो जीवतीव स साधुः । तस्यापीदृश एव प्रकृष्टः कण्ठस्वर आसीत् ।"

(राजकालीमालोक्य) "वत्से ! आनयेह तां ते भ्रातुः स्वर्गिणो वरकर्मणः पुत्रीम् ।"

पितुर्वचनमाकर्ण्य राजकाली गता भ्रामरीं गुरोरन्तिकं नेतुम् ।

एतावत्यन्तरे सह द्वाभ्यां वयस्याभ्यां सार्वभौमकुमारोऽन्तः प्रविष्टः । सत्यरथः ससम्भ्रमं गत्वा तस्मै स्वागतमदात् । आनीतवांश्च तं गुरोरन्तिकम् । स च देशिकं भक्त्येव तं नमस्कृतवान् । देशिकश्च राजकुमारमाशिषाऽभ्यनन्दीत् । तदनु राजपुत्रस्य वयस्यौ चाचारं निर्वर्तितवन्तौ । तयोरेकः सेनापतेर्भ्रातृपुत्रो रुद्रसेनः । अपरो जम्बुकस्य भागिनेयः कामसेनः ।

सत्यरथेन ते सत्कृता उचितासनेषु समुपविष्टाः । अस्यावान्तर-

कलकलस्य समाप्तेरनन्तरं राजकाली भ्रामरीं गुरोरन्तिकं नीतवती। तद्दृश्यं विश्वसारस्य मनसि कमपि लज्जासदृशं भावमजीजनत्।

भ्रामर्यवन्दिष्ट गुरोश्चरणौ।

श्रीनाथः - "वत्से! किं ते माता कुशलिनी?"

भ्रामरी - (बाष्पाकुलाक्षी भूत्वा) "भगवन्! घोरेण ज्वरेण बाध्यते।"

श्रीनाथः - "वत्से! मा शोकं कार्षीः। सकृदपि कृतः शोकश्चिरात् सम्पादितां शक्तिमुन्मूलयेत्। धैर्यं नाशयेत्। स महान्प्रतिबन्धको महज्जिगमिषोः तव पितरौ निदर्शनभूतौ परस्परानुरक्तौ दम्पती। मन्ये तव माता पत्युर्वियोगादेवास्वस्था संवृत्ता।"

भ्रामरी - (उत्तरीयाञ्चलेनाश्रुजलं प्रसृज्य) "सत्यम्।"

श्रीनाथः - "अधुना पठितं पद्यं किं ते कृतिः?"

भ्रामरी - (अधोमुखी) "अथकिम्।"

श्रीनाथः - (राजकालीमवलोक्य) "वत्से! उपविशत्वियं तवान्तिके।"

राजकाली तां नीत्वा स्वस्याः स्वभगिन्याः कान्तिमत्याश्च मध्ये तामुपवेशयति।

एतस्मिन्नन्तरे विश्वसारप्रभृतयस्त्रयो नारीमण्डलं चक्षुर्भिः पिबन्त इव न्यभीभलन् । गते प्रकरणे पाठकेभ्यः परिचायितं युवत्यष्टकं विशेषतः । तेषु महारसिकंमन्यस्य कामसेनस्यान्तरङ्गध्वनिरेवमभूत् -

"नारायणो नित्यं वक्षसा ध्रियमाणायां पद्मायां किञ्चिदवज्ञां वहेद्यदीमां पश्येन्मधुमतीम् । महेश्वरः सन्ततं शिरसा धार्यमाणायां स्वर्णदीदेवतायां ईषदलक्ष्यभावं वहेद्यदीमां लोकेत मनोरमाम् । मदनो नितान्तमात्मना श्लाघ्यमानां रतिं किञ्चित्परिहसेद्यदीमामीक्षेत सुलक्षणाम् । नन्दिकेश्वरो निजे कामतन्त्रे नूतनं विलासाध्यायं योजयेद्यदीमां विलोकयेद् विलासवतीम् । नलकूबरो मनोवल्लभायां रम्भायामीषत्तिरस्कारभावं विभृयाद्यदीमां निभालयेत्कनकवल्लीम्। चतुर्मुखः सर्वसौन्दर्यसारतिल-निर्मितां तिलोत्तमां स्मरेद्यदीमां प्रपश्येच्चन्द्रप्रभाम् । कृष्णद्वैपायनो भारतेतिहासनायिकां भूयो भूलोके सम्भूतां वर्णयेद्यदीमां निर्वर्णयेत् फलिनीम् । पुरन्दरः स्वस्य सहस्रं नयनानि चरितार्थानि मन्येत यदीमां प्रेक्षेत पुष्टधवलाङ्गीं कन्याम् । का वेयं स्यात् ?"

विश्वसाररुद्रसेनौ च न पूर्णां नालोकिषाताम् । तयोश्च मनस्येष एव प्रश्न उदितः "का वेयं स्यात् ?"

भ्रामर्या उपवेशनादनन्तरं देशिको राणायनमालोक्याब्रवीत् - वत्स ! राणायन ! तव शिष्यासु कति पद्यानि रचयितुं शक्ताः सन्ति ?"

राणायनः - "चतस्रः ।"

श्रीनाथः - "युष्माकं कालादपि स्त्रीविद्यायामद्यतनः कालः सुमुज्ज्वलः ।

तस्मिन्काले कृतविद्यासु राजकाल्येका कवयित्री । सम्प्रति पञ्च । तव शिष्याश्चतस्रो वारकर्मणी च भ्रामरी ।''

सुमित्रः – ''भगवन् ! षडिति वक्तव्यम् । वैशालाक्षी पूर्णा चोत्तमा कवयित्री ।''

सम्प्रति विश्वसारप्रभृतिभिस्त्रिभिरात्मजिज्ञासिता पूर्णेत्यनुमितम् ।

श्रीनाथः – (सुमित्रमालोक्य) ''वत्स ! गौतम ! एतासां षण्णां च कविता परीक्ष्यताम् । त्वमालोच्य देहि विषयम् । छन्दश्च नात्यक्षरं किमपि । यमधिकृत्य यत्रेमाः कवयेयुः ।''

सुमित्रः – ''यदाज्ञापयति भगवान् ।''

इति क्षणान्कतिपयानालोच्य षट् कवीश्वरीरभिलक्ष्याह – ''वत्साः ! एकैकया द्वे द्वे पद्ये रचयितव्ये बार्हते छन्दसि यथेष्टं वृत्तमवलम्ब्य । प्रथमे पुरुषाय शीलोपदेशो विषयः । द्वितीयेनार्यै। उभयत्रापि निन्दास्तुतिभ्यां तात्पर्यं व्यञ्जनीयम् ।''

श्रीनाथः – ''गौतम ! कुशलोऽसि त्वं परीक्षायाम् ।''

प्रशिष्याणां कन्यानां सभायां वैदुष्यख्यापनं श्रीनाथस्योद्देशः । तेन तासां वरणाय श्रीमन्तो युवान उत्साहवन्तः स्युरिति तस्य दृष्टिः । सभा च तेन सूचनेन सन्तुष्टा । सुमित्रेण दत्तो विषयश्च परमाकर्षकोऽभूत् सभायाः । दापितालेखनसामग्री षड्भ्य कवीश्वरीभ्यः सत्यरथेन ।

सम्प्रति तासां कवितां श्रोतुं सर्वापि सभा दत्तकर्णा निभृता तिष्ठति गताः कतिपयेक्षणाः । षडपि पद्यरचनं समाप्य पत्राण्यधो न्यधुः ।

अथ परमगुरोरादेशमनुसृत्यादौ मधुमती वेणुनादानुकारिणा स्रोतोहारिणा स्वरेणापाठीत्स्वे पद्ये ।

(२) "योषितः परगृहजुषो दूषयन्व्रजति पतनम् ।
जोषयन्व्रतमचपलो भूषयत्यवनिभुवनम् ।।"

(३) "पूरुषं परमभिसृता सङ्गमेव परिभवेति ।
भर्तरि स्थिरतररतिर्दिव्यशक्तिमनुभवति ।।"

श्रीनाथः - "वत्से ! आन्ध्रराजनन्दिनि ! कमनीयस्ते पद्यबन्धः । पण्डितहृदयस्पृग्भावः ।"

अनन्तरं मातामहदृष्टिप्रेरिता मनोरमा कीरकूजितानुकारिणा कर्णा-राधकेन स्वरेणापाठीत् स्वे पद्ये ।

(४) "भवति परदारलग्नः कलुषतिमिरान्धुमग्नः ।
परयुवतिसोदराणां जितशशियशो नराणाम् ।।"

(५) "स्मरणमपि पापकार्यं परतरचलन्मतीनाम् ।
चरणमिह मौलिधार्यं पतिपदजुषां सतीनाम् ।।"

श्रीनाथः - "वत्से ! त्वामीदृशकविताकारिणीं प्रसूय जितमस्माकं

कान्तिमत्या ।''

तदनु परमगुरुदृष्टिप्रेरिता चन्द्रप्रभावल्लकी क्वणितानुकारिणा श्रोत्ररञ्जकेन स्वरेणापाठित्स्वे पद्ये । तां पठन्तीं निर्निमेषमद्राक्षीद्विश्वसारः ।

(६) ''परयुवतिविलोलः स्यादुभयभुवनविभ्रष्टः ।
अतिचरतिनयो जायामयममलतमः शिष्टः ।।

(७) ''परपुरुषजुषां स्त्रीणामसुरभिचरितं निन्द्यम् ।
पतिमनतिचरन्तीनां पदसरसिरुहं वन्द्यम् ।।

श्रीनाथः – ''वत्से ! भारद्वाजि ! प्रसन्नरमणीयस्ते पद्यबन्धः । भावश्चोन्नतः ।''

पश्चात्परमगुरुदृष्टिप्रेरिता फलिनी कोकिलकाकल्यनुकारिणा श्रवणतर्पणेन स्वरेणापाठीत्स्वे पद्ये ।

(८) ''अन्यस्त्रीषु रतः सुकृतं वंशस्यैव खलो हरति ।
धन्यो मातृवदन्यवधूः पश्यन्विश्वहितश्चरति ।।''

(९) अन्याधीनमना ललना भर्तुः सद्मभरो भवति ।
पातिव्रत्यवती सुदती जातेमौलिमणिर्लसति ।।''

श्रीनाथः – ''वत्से ! नागधरि ! उत्तमस्ते पद्यबन्धः । मनोहरो भावः ।''

अथ परमगुरोर्दृष्टिर्वरकर्मणः पुत्रीं प्रत्यगमत् । सा मत्तमयूरकेकानुकारिणा

श्रवणाकर्षकेण स्वरेणापाठीत्स्वे पद्ये। पठन्तीं तां सकरुणमद्राक्षीद्विश्वसारः। इतः प्राक् किञ्चिच्छिथिल इवानुरागः पुनर्दृढग्रन्थिरभूदस्यां तस्य।

(१०) "नाशनमात्रा जुष्टवता मन्यसुनेत्रा दुष्टकथा।
आत्मवधूटीमात्ररतेः स्यात्प्रियचेटी पुण्यकला॥

(११) "अन्यरतानां यद्वृजिनं सर्वशुभानां तद्दमनम्।
पुण्यसतीनां यत्सुकृतं केनचिदेतन्नोपमितम्॥"

श्रीनाथः – "वत्स्ये! वारकर्मणि! ते कविता नितान्तं ललिता।"

अन्ततः परमगुरोर्दृष्टिः पूर्णां प्रत्यगात्। सा मेघस्तनितानुकारिणा गम्भीरेण स्वरेणापाठीत्स्वे पद्ये।

(१२) "परजीवसखीसरसो यमिनामपि राट्पतति।
इतरेन्दुमुखीविमुखो मधुपोऽपि दिवं जयति॥"

(१३) "परिभूतिभरायभवे परलालसधीर्वनिता।
कुलयोरुभयोरभयं कुरुते पतिमात्ररता॥"

श्रीनाथः – "वत्से! वैशालाक्षि! मधुरेण समापिताऽस्माकं कवित्वपरीक्षा। धन्यो विशालाक्षः। यस्य त्वं कन्या।"

इयता समाप्तोऽस्माकं प्रकराणांशः। सभा च प्रायः समाप्ता। गुरूपदेश-भेषजस्यानुपानमिवाभूत् सुन्दरीकवितारसास्वादः सभ्यानाम्।

पञ्चमं प्रकरणम्

## चक्षुःप्रीतिः

सभासमाप्तेरनन्तरं सर्वे स्वस्वगृहान्याताः । नगरपालो विष्णुशर्मा गृहान्यातः स्वस्य कुट्यां समुपविष्ट इत्थं दृष्टं सर्वं रोमन्थमिवकृतवान् ।

अद्यैव प्रातराचार्यविषमसिद्धिना तमुद्दिश्यवाक्यमेकमुक्तम् । "वत्स ! विष्णो ! रणन्धरस्ते प्रियः सुहृत् । सम्बन्धी च भवितुमिच्छति स्वस्य धर्मभगिनीं पूर्णां तुभ्यमर्पयित्वा । तस्याः सर्वोऽपि भारो विशालाक्षस्तस्मै पुत्रनिर्विशेषाय भागिनेयाय किल विसृष्टः । सा तवानुरूपा । यथा मे दृष्टिर्मनश्च कथयतः ।" इति ।

विशालाक्षप्रयत्नस्यैवेदं फलितं यदाचार्यविषमसिद्धिरमोघमात्मनो वचनं प्रिये शिष्ये विनियुक्तवान् । "स्मरामि दारग्रहणकाले गुरोर्वचनं पूज्यं प्रियस्य सुहृदश्चाभिलाषम् । स च गुरोराशिषा सन्निहितो भवतु कालः । उन्मीलितो भवत्वचिरात्परन्तपसङ्गः ।" इति प्रत्युत्तरं तदा विष्णुशर्मा गुरवे दत्तवान् ।

सम्प्रति किमभूत् ? न केवलं गुरोर्वचनम् । न च केवलं प्रियस्य सुहृदः प्रार्थनम् । पूर्णायाः कमनीयं रूपं च तत्र विषये महत्कर्माकार्षीत् । तस्मै महत्कर्म कुर्वते ललिता कविता साहाय्यकमकार्षीत् ।

विष्णुशर्मा निष्कलङ्को ब्रह्मचारी । पुंसां रागपूर्वकं विवाहम् अधिक्षिपत्सुप्रथमः । स सम्प्रति किञ्चिद्भग्नदर्प एवमचिचिन्तत् ।

"अहो प्रतारितनयनोऽस्मि तया युवत्या । अथवा नात्रापराद्धं हृदयेन । नयनयोरेवेदं लोकोत्तरविषयलाभभवं चापलम् । चक्षुषि प्रीतिमते को दोषः ? सुरूपकुरूपाभिज्ञस्य तस्यागर्हणीयः स निसर्गः । तत्सुरूपे प्रवृत्तं स्यात् । कुरूपान्निवृत्तम् । तावता मनसि न कामित्वमारोपयितुं शक्यम् । सैषा चक्षुषो रूपस्तुतिः मनसो गुणस्तुतिश्च विलक्षणे एव रागात् । न मे मनसि पदं कर्तुमद्यापि साहसी सूनशरः । एतावदङ्गीक्रियते यद्गुरुणा मयि करुणया प्रदर्शितम् । यच्च प्रियेण सुहृदा मयि स्नेहेन दित्सितम्। तत्कन्यारत्नममूल्यम् । सार्वभौमकुमारैरपि प्रार्थनीयम् । महता पूर्वपुण्येनैव लभ्यम् ।"

एवं चिन्तयन्विष्णुशर्मा विश्वसित्यात्मानं धीरमेव ब्रह्मचारिणम् । तस्य चक्षुर्मण्डलवर्ती हिरण्मयः पुरुषस्तु तं जातरागमेवा जीगणत् ।

षष्ठं प्रकरणम्

## षण्णां सदः

षण्णां कन्याकवीश्वरीणां कवितातिशयस्तस्मिन्दिने सूर्यास्तमयात्प्रागेव गिरिव्रजे सर्वेषु स्थलेषु विदितोऽभूत् । प्रागेव शुभ्रा तदानीं भूयः शुभ्रतां दधाना सरस्वती दिव्यशरीरकिरणसन्ततिमनुकुर्वाणा तासां कीर्तिः सभामण्डपेषु पठनशालासु विपणिश्रेणीषु कन्यागोष्ठीषु राजकीय-कार्यालयेषु चाराजिष्ट सुतराम् । तया चैत्रशुक्लद्वादश्याः सायाह्नकालः प्रक्षालित इवाभूत् । राजधान्याः शरीरमनुलिप्तमिवाभूत् ।

विश्वसारस्य भ्रामर्यामादरोऽत्यधिकोऽभूत् । मधुमतीचन्द्रप्रभे साधयितुं कामो बलवानभूत् । अजनिष्ट च नूतना पूर्णाफलिन्योराशा । यत्तस्य मनोरमायामाशा नोदिता तत्रान्यदेव कारणं न पर्याप्तबुद्धिः । मनोरमा विमातुर्भगिनी सुतेत्यात्मनो भगिनीस्थानीया भवति । मनोरमां विना पञ्चकवीश्वर्यो राजसेना विलासवती पुनर्भूश्चात्मनो मगधसाम्राज्यं शासतोऽष्टौ महिष्यो युक्ता इति तस्य मनोवीथ्यां कतिपयक्षणानभिलाषप्रचारोऽभूत् । अनन्तरं कश्चन समाचारस्तेन स्मृतः । तस्मिन्नेव दिने प्रातर्भूपतिना यद्विशाखमन्वेष्टुं हिमाचलं प्रति कतिपये ब्राह्मणाः प्रेषिताः । तेन पुनः स निरुत्साहोऽभूत् । पद्मावती देव्याश्चेतसः समाधानायैव तत्प्रेषणं न विशाखं जीवन्तं हिमाचले स्थितं विदित्वेति क्षणाद्भूयः समाहितान्तःकरणोऽभूत् । पुनस्तस्य दृशोः पुरो भावना कल्पिता अष्टौ महिष्यो नाट्यमकार्षुः ।

वीरमित्रस्तस्याः सभायाः सम्भवनमागतो भ्रामरीं विना पञ्चसु कवीश्वरीष्वन्यतमां वरणीयाममंस्त । मधुमती तासु दुर्लभेति तस्य दृष्टिः । पूर्णा रणन्धरानुरक्तेति । उक्तं तस्मै हि तथा सुमित्रेण । परिशिष्टास्तिस्त्रः । तासु मनोरमा चन्द्रप्रभाफलिन्यो यथापूर्वं श्रेष्ठा इति वीरमित्रस्य दृष्टिः । चन्द्रप्रभामनोरमाफलिन्य इति सुमित्रस्योक्तिः । अन्ततश्चन्द्रप्रभामनोरमयोर्या साध्या सा सङ्घटनीयेति वीरमित्रेण सुमित्रो निसृष्टार्थः ।

सभासमाप्तेरनन्तरं भवशर्मा चन्द्रप्रभया सहालोचितवान् । किं वीरमित्रो ग्राह्यः आहोस्वित्प्रत्याख्यातव्य इति । अस्ति भूयसी सम्पद्वीरमित्रस्य । अस्ति कमनीयं रूपम् । अस्ति विद्या । तथापि नारोचिष्ट स चन्द्रप्रभायै । सम्पत्तेरपि रूपादपि विद्याया अपि तया तस्मिन्नूतने वरे गुणा एवान्विष्टाः । अल्पा एव दृष्टाः । प्रयतमानोऽपि भवशर्मा तां वीरमित्राभिमुखीं कर्तुं नापीपरत् । अथ भार्याद्वारा स प्रयत्नमकार्षीत् । तत्रापि विफलोऽभूत् ।

विष्णुशर्मणश्चन्द्रप्रभायां प्रीतिरधिका । चन्द्रप्रभायाश्च तस्मिन्भ्रातरि भक्तिर्भूयसी । स चन्द्रप्रभां मार्गायानेतुं प्रभवेदिति मत्वा पिता तस्मै विषयमामूलाग्रं कथितवान् । स सर्वं निशम्य नवमाक्षेपं प्रदर्शितवान् । "विशाखस्य नष्टत्वात्प्रायो विश्वसारो भावी चक्रवर्ती । दण्डनायका-श्चक्रवर्तिनो हस्ते । यदि चक्रवर्ती दण्डनायके रुष्टः स्यात्तर्हि सन्ति तस्य बहव उपायाः परिपालनतन्त्रे दण्डनायकं पदवीतः संस्थानाच्च च्यावयितुम् आत्मनो मनोहारिणीं योऽन्यः परिणयेत्स सामान्यतो द्वेषी सर्वस्य। विशेषतो राजकुमाराणाम् । एवं स्थिते वीरमित्रो यदि चन्द्रप्रभां परिणयेद्द्रुष्टो विश्वसारः स्वस्याधिकारकाले वीरमित्रं चेत्संस्थानाच्च्यावयेत्

तन्महत्कष्टं तत्कुटुम्बस्य । तस्माद्विश्वसारानुरागवृत्तान्तमकथयित्वैव वीरमित्राय चन्द्रप्रभायाः प्रदानां तस्य प्रतारणमेव वक्तव्यम् । तच्चायुक्तम् ।" अयमेव विष्णुशर्मणो नूतन आक्षेपः । अत उपरि भवशर्मा निरुत्तरोऽभूत् । अनिच्छन्नपि वीरमित्रं प्रत्याचष्टसुमित्रस्यपुरः ।

अथ सुमित्रस्य प्रयत्नोऽन्यथा चलितः । स प्रथमं गुरुचरणानां पुरो विषयं निक्षिप्तवान् । मनोरमां वरयते वीरमित्र इति । कान्तिमती-राणायनावेव तत्र प्रभवतो नाहमिति भट्टपादा अवादिषुः । अनन्तरं चतुरः सुमित्रो गुरुदुहितुः कान्तिमत्याः पुरो विषयं तं निहितवान् । सा त्वङ्गीकृतवती । वित्तैकलक्ष्याः खलु मातरो विवाहसन्दर्भेषु । अनन्तरं कान्तिमतीसुमित्रौ तं विषयं राणायनस्य पुरो न्यधाताम् । स तस्मिन्नेव क्षणे गत्वा रहसि दुहितुरिष्टमप्राक्षीत् । किं च स्पष्टीकृतवान् "तव सम्मतिरेवात्र मुख्या । अहमत्र सर्वथा तटस्थः ।" इति श्वो वक्ष्यामीति सा प्रत्युत्तरमदात् । स प्रत्याश एव गतः सुमित्रः अस्य प्रकरणस्य कथांशादिमे पूर्वे सन्दर्भाः ।
तस्यैव दिनस्य निशामुखे राजकाल्याः सदने षड् व्यक्तयो मिलिताः । प्रथमा गृहस्वामिनी । विशालाक्षरणन्धरौ द्वितीयतृतीयौ । शेषाः पूर्णाफलिनीमनोरमाः । यत्र शय्यायां वीरभद्राय नीराजनं कृतवती राजकाली तत्रोपविष्टाश्चतस्रो नार्यः । अशोभिषत ताश्चतस्र इव तिथिदेवता एकत्र मिलिताः । अनुमतिरिव मनोरमा । राकेव पूर्णा । सिनीवालीव फलिनी । कुहूरिव राजकाली । शय्यान्तिके पृथगासनयोरुपविष्टौ विशालाक्षरणन्धरौ । मितवचनमनवसरप्रसङ्गरहितं सम्भाषणमारब्धम् ।

मनोतमा – "सामन्तवीरमित्रः सुमित्रद्वारा मां वृतवान् । तातपादास्तु ममेष्टमत्राप्राक्षुः । स्वयं ते तटस्थाः । किमत्र मया प्रतिपत्तव्यम्?"

राजकाली – "न वीरमित्रपरिणयेन किञ्चिदपि सङ्घस्यानुकूलम् । तस्य यद्द्रव्यं तन्मातामहस्य शिवनाथस्य परिशीलने । जीवति तस्मिन् काकिण्यपि तस्मादस्माकं दुर्लभा । स कृतविद्योऽपि न प्रज्ञावान् । कः पृच्छेद्भाषाज्ञानम् ? शस्त्रविद्यायां स सवयस्केषु दशभ्योऽनन्तरं एव स्यात् । तस्मान्नानुरूपश्च स मनोरमायाः ।"

रणन्धरः – "स मगधेषु महांत्संस्थानपतिः । वरगुणेषु गणनीयमेव तादृशमैश्वर्यम् ।"

राजकाली – "यदि संस्थानपतिरभिमतः वीरमित्राद्धनञ्जयः श्रेयान् । स कृतविद्यः प्रज्ञानिधिश्च । सद्गुणानां राशिः । शस्त्रविद्यायां विषमसिद्धेः शिष्येष्वेष प्रथमश्रेण्यामेव गणनीयः । द्रव्यविषये धनञ्जयः पित्रापरवान् । वीरमित्रो मातामहेनेति विशेषः । पूर्वो नाममात्रेणाधिकारी प्रायः पुत्र निसृष्टाधिकारः । उत्तरो दौहित्रं नाममात्राधिकारिणं कृत्वा स्वयं गृहीतसर्वाधिकारः । यद्यस्माकं सदसो धनञ्जयः सम्मतः स्यात्तर्हि स शिरसा पूजयन्निमां यथा गृह्णीयात्तथा कर्तुं प्रभवेयमहम् ।"

रणन्धरः – "धनञ्जयश्चेन्मिलेद्वीरमित्रः प्रत्याख्यातव्य इत्यत्र सम्मतिरेव मे ।"

फलिनी – (सहासम्) "रणन्धरश्चेन्मिलेद्धनञ्जयः प्रत्याख्यातव्य इति मम मतिः ।"

पूर्णा – "समर्थ्यते मया मतं सख्याः फलिन्याः ।"

मनोरमा – "अहं प्रभोर्गजवीरस्यार्थे फलिनीं वरये । तदप्यत्र सदसि

विचारयितव्यम् ।"

पूर्णा – "अहं मोदनानुमोदे मनोरमायाः सख्याः प्रभोरर्थे फलिनी-वरणमिदम् ।"

राजकाली – (विशालाक्षमवलोक्य) "पूर्णा कस्मै निश्चिता ?"

विशालाक्षः – "विष्णुशर्मणे नगरपालाय ।"

राजकालीमनोरमाफलिन्यः साश्चर्यं शृण्वन्ति । अनन्तरं विशालाक्षेण सहेतुकमात्मनो निर्णयः समर्थितः । तृप्ता राजकाली ।

मनोरमा – "किमङ्गीकृतवान्विष्णुशर्मा ?"

विशालाक्षः – "प्रयत्नः क्रियते । अङ्गिकरिष्यत्यचिरादिति मम दृढो विश्वासः ।"

फलिनी – "उपक्रान्तो विषयः समापयितव्यः । सखीं मनोरमां कस्मै दातुमुचितां मन्यते भगवती ?"

राजकाली – "तस्यास्त्रयोऽनुरूपाः (रणन्धरमालोक्य) वत्स रणन्धर ! तेषु त्वमेकः । द्वितीयो रणवीरः । तृतीयो धनञ्जयः । एतेष्वन्यतमं वृणोतु स्वयं मनोरमा । यदि रणवीरो व्रियते तर्हि महाकार्यसिद्धि-पर्यन्तं वत्सया कन्ययैव भवितव्यम् । स हि सम्प्रति न बन्धुजनामोद्य-वरकोटौ । धनञ्जयश्चेद्व्रियते कतिपयदिनमध्य एव विवाहो भवेत् ।

रणन्धरश्चेद्यथेच्छामस्तथा ।"

मनोरमा - "कनिष्ठाम्बा यं मह्यमुचितं मन्यते स एव मया व्रियते ।"

विशालाक्षः - "भगिनीकान्तिमत्यस्मिन्नेवोत्तरायणे वत्सायाः परिणयं निर्वर्तयितुं विशेषतः। कुतूहलवती दृश्यते। अतो रणन्धरधनञ्जययो-रन्यतर एव निर्णेतव्य इति मम सूचनम् ।"

राजकाली - "भ्रातः ! तयोर्भवान् कं मन्यते वत्साया अनुरूपम् ?"

विशालाक्षः - "सम्पदा कुलगौरवेण चाधिको धनञ्जयः। धर्मनिष्ठायामुभौ तुल्यौ । इतरैः सर्वैर्वरगुणैरधिको रणन्धरः । अयं स्पष्टो विषयः।"

राजकाली - "अत्राहमुचितं मन्ये । अनयोरन्यतरो वत्सायाः सम्मत इति कथयिष्याम्यहं भावस्य राणायनस्याग्रे । स एव निर्धारयत्वन्यतरम् ।"

विशालाक्षः - "युक्तः कल्पः ।"

पूर्णा - "यत्सख्या मनोरमया सूचितं तदप्यत्र सदसि निर्धारयितव्यम् । सा हि प्रभोर्गजवीरस्यार्थे फलिनीं वरयते ।"

राजकाली - "अहं समर्थयामि तद्वरणम् ।"

पूर्णा - "मया प्रागेव समर्थितम् ।"

रणन्धरः - "को नामास्मासु न तत्समर्थयेत् ?"

विशालाक्षः - "तन्मया निर्वञ्चनं समर्थ्यते ।"

रणन्धरः - "को नामास्मासु न तत्समर्थयेत् ।"

राजकाली- (फलिनीमालोक्य) "वत्से ! किं सदसो निर्णयस्त्वया स्वीक्रियते ?"

फलिनी - (सस्मितम्) "स एव वर आगत्य वरयतां माम् । तदा तेन सहाहं सम्भाषिष्ये विषयमेतमधिकृत्य ।"

सप्तमं प्रकरणम्

## मुखामुखि

फलिनी यावद्वाक्यमपूपुरत्तावत्तां शालां कश्चित्पुरुषः प्राविक्षत् । सर्वेषां दृष्टयस्तस्मिन्पतिताः । कोऽयम् ?

स एव यस्य नाम सर्वतः साम्राज्ये चरति जनानां कर्णेषु । भयं ददाति रक्षिजनेभ्यः । पूज्यते रहस्य गोष्ठीष्वङ्गराष्ट्रे । स एव यस्य बाह्वोर्बलं मारुतेरिव निरुपमानम् । यस्य चापविद्यानैपुण्यं श्रीरामस्येव निस्तुलम् । यस्यासहायशूरत्वं जामदग्न्यस्येव निःसदृशं । स एव उदयङ्कराणां हर्षवर्धनो नेता । भयनिबर्हणस्त्राता । कूटभारवाही धाता । स एव यस्यार्थे फलिनीं वृतवती मनोरमा । यस्यार्थे तद्वरणं समर्थितवन्तश्चत्वारः । येन सह सम्भाषितुमैषीत्फलिनी ।

कन्यास्तिस्रो न जानन्ति गजवीरं रूपतः । तदैवाद्राक्षुः ।

"स्वागतं ते वीरनायक ! स्वागतम् । समागतोऽसि समये । तवार्थे भगिनी मनोरमा फलिनीमयाचिष्ट पाणिम् । इयं साक्षात्त्वयैव सम्भाष्योत्तरं वक्ष्यामीत्यवादीत् । अत उपरि त्वमसि । अस्ति फलिनी । युवयोः सम्भाषणमनुकूलपरिणामं चेत्समाप्येत वयमिह सर्वे सन्तोषम् अनुभविष्यामः ।"

सम्प्रति ज्ञातं कन्याभिः स नायको गजवीर इति । आदौ तं पूर्णा भयङ्करवेषममंस्त निर्जरम् । मनोरमा तु कञ्चित् सौम्यवेषं राक्षसम् । फलिनी तु चिरं जीविनं कञ्चित्पुरातनभारतवीरम् । यदा तास्तं गजवीरमज्ञासिषुस्तदा तासां सन्तोषस्य नाभून्मितिः।

सम्भ्रमेण फलिन्युत्थाय तस्मै पृथगासनमचीक्लृपत् । स यथाचारं विशालाक्षं राजकालीं च प्रणम्य रणन्धरमालिङ्ग्यासने समुपविष्टः । अथ राजकाल्यै वक्तव्यं प्रत्युत्तरमेवमवादीत् ।

"भगवति ! कृतं स्मरामि भगिन्या मनोरमायाः या ममार्थे किमप्यमूल्यं रत्नं सम्पादयितुं प्रयतते एतावदहं ब्रवीमि महात्मनो नगधरस्य दुहित्रे । इयं चेदात्मनोऽनुरूपं गजवीरं मन्यते तर्हि न सुदुर्लभोऽस्याः । वक्तव्यं स्पष्टमुच्यते । नास्ति वरगुण एकोऽपि गजवीरे । कुलं दुर्विज्ञेयमितरैः । धनं तु नास्ति काकिणीमात्रमपि स्वकीयम् । रूपं भयङ्करं सुकुमारीणां कन्यानां । श्रुतं मृग्यम् । क्षणे क्षणे संशयग्रस्तं जीवितम् । किं च कलङ्काक्रान्तम् ।"

राजकाली – "वत्से ! फलिनि ! किमुत्तरमत्र भाषसे ? वरश्च स्वयं वृतवान् ।"

फलिनी – "अत्र शृण्वन्तु मे वचनं सर्वे । यदि प्रभुर्वरयते तर्हि फलिनी न तस्य दुर्लभा । न वा गुणानपेक्षन्ते विधेयानां कन्यानामनुरागाः । अथवा गुणा अन्ये । अनुभावोऽन्यः । भयङ्करमावर्जयितुमेव पूज्यैः प्रेरिता फलिनी प्रयतेत ।"

पूर्णा - "फलिनी चेद्वरयते प्रभुरङ्गीकुर्यात् । प्रभुश्चेद्वरयते पूज्यवचनगौरवेण फलिन्यङ्गीकुर्यात् । मयापि प्रष्टव्यं स्वष्टं पृच्छ्यते । यत्प्रभुर्वृतवानिति भगवत्याह तत्र मे संशयः । यतस्तद्वाक्येषु नास्ति स्पष्टं वरणसूचनम् ।"

राजकाली - "यत्स मनोरमायै कृतज्ञतां प्रकटयति स वरणस्य पर्यायः ।"

पूर्णा - (गजवीरमालोक्य) "प्रभो ! किं तत्सत्यम् ?"

गजवीरः - "प्रिये ! भगिनि ! शृणु ।

१४. स्वहितं वरकान्तिमतीसुतया
विहितं वरणं शिरसा धृतवान् ।
स्वयमप्यथ नागधरीममरी
सदृशीमयमब्जदृशं वृतवान् ।।"

राजकाली - "प्रियं नः प्रियं नः ।"

पूर्णा - (अलसं हासं कुर्वाणा) "अनेनाशुरचितेन प्रभोः श्रुतस्य मृग्यत्वं व्याख्यातम् (फलिनीमालोक्य) प्रिये ! सखि ! किं मे ददास्यधिकारं तवार्थे प्रभवे प्रत्युत्तरं दातुम् ?"

फलिनी - "किमत्र प्रष्टव्यं च त्वया । त्वमसि ममात्मनिर्विशेषा हि सखी ।"

पूर्णा – (गजवीरमालोक्य)

१५. “गिरिणा सदृशं वरधीरगुणे
हरिणा सदृशं भजतां भरणे ।
उररीकुरु ते गजवीरमियं
वरयन्तमनन्तगुणं फलिनी ।।”

रणन्धरः – “प्रियं नः प्रियं न : ।”

गजवीरः – “न वयं प्रतिनिधीनां प्रत्युत्तरेण तृप्यामः । स्वयमेव ददातु प्रत्युत्तरं दण्डनायकदुहिता ।”

फलिनी – “एवं चेच्छृणोतु प्रभुः ।

१६. अरुणं किरणैः शरणं भजतां
द्विषतां मुकुटेषु लसद्रटताम् ।
मलिनीभवदङ्गबलद्युतिदं
फलिनी भजते गजवीरपदम् ।”

मनोरमा – “प्रियं नः प्रियं नः ।”

एतावतोपक्रान्तो वरणाध्यायः समाप्तः । अनन्तरं ते सप्त सङ्घकार्यम् अधिकृत्य मुहूर्तं मन्त्रितवन्तः । यदालोचनार्थमेव गजवीरस्तत्रायातः । तत्रापि पर्यवसानं हर्षणमेवाभूत् ।

राजकाली तस्यामेव रात्रौ मनोरमाया आशयं राणायनाय न्यवीविदत् । राणायनः सह कान्तिमत्या दीर्घमालोच्य धनञ्जयमेव युक्तं निर्णीतवान् । मनोरमा पितुर्निर्णयं शिरस्यकार्षीत् । राणायनेन श्वो भूते वीरमित्रः प्रत्याख्यातः । उभयत्रापि विफलः सुमित्रो यजमानं द्रष्टुमेव नापीपरत्प्रथमम् । अन्ततः कथञ्चित्तामनिष्टां वार्तां नीतवान्वीरमित्राय ।

अष्टमं प्रकरणम्

## मनोरमापरिणयः

सुमित्रः प्रयत्नद्वयमकरोत् । चन्द्रप्रभां मनोरमां वा वीरमित्राय सङ्घटयितुमेकम् । यशोधरस्य फलिन्यां दुहितृप्रेमाणं शुद्धं कृत्रिमं वोत्पादयितुमपरम् । पूर्वस्मिन् विफलोऽभवत् । उत्तरस्मिन् कृतार्थः । यशोधरेण त्रयोदश्यां मध्याह्ने फलिनीं मात्रा सह निजभवने प्रेमातिथी भवितुमाहूतवान् । अयाचिष्ट च प्रीत्येव गताचर्या विस्मर्तव्येति । मालतीफलिन्यौ च तस्य प्रीतिं प्रतिगृह्णान्त्यावभूतामतिथी ।

यशोधरस्यास्मिन्परिवर्तने यद्यपि सुमित्रस्य प्रबोधनं कारणम्, तथापि भट्टपादानां नागधरीति सम्बोधनमेव तस्य बलप्रदमासीत् ।

सम्प्रति सुमित्रो वीरमित्रस्यार्थे फलिन्याः पुरस्तादन्त्यं प्रयत्नं कृतवान् । तत्राऽपि स विफलोऽभूदिति न पृथग्वक्तव्यं पाठकेभ्यः । अथ वीरमित्रस्तस्मिन् वसन्ततौ गृहस्थाश्रमं प्रवेष्टुं निरुत्साहोऽभूत् ।

तस्मिन्नेव दिने राजकाली धनञ्जयस्यावर्जने सफलाऽभूत् । राणायनो राजकाल्या प्रेरितः स्यालं सत्यरथं परिशिष्टे साम्प्रदायिके सङ्घटनकर्मणि नियुक्तवान् । नितान्तं सुन्दरी मनोरमा । बहुषु तन्त्रेषु व्युत्पन्ना । मधुरनिबन्धना कवीश्वरी । सर्वथा कलङ्कगन्धरहिता कुलकन्या । सुता दिग्गजस्य राणायनस्य । दौहित्री महादेशिकस्य श्रीनाथस्य ।

भागिनेयी महोन्नताधिकारस्य सत्यरथस्य । मातृष्वस्रीया भाविनश्चक्रवर्तिनो विशाखस्य । इष्टा वरस्य धनञ्जयस्य । समृद्धा लक्ष्मीरिव स्पृहणीया । निरवद्या विद्येवादरणीया । तां रिपुञ्जयः कथं तिरस्कर्तुं प्रभवेत् । अङ्गीकृतवान् महता सन्तोषेण । परेद्यव्युत्तरफल्गुन्यां विवाहमुहूर्तो निश्चितो वृद्धैः ।

चतुर्दश्यां प्रातः कृतस्नातकव्रतं सखायं धनञ्जयं विष्णुरणन्धरसिंहवाहनप्रभृतयोऽभ्यनन्दिषुः । तस्मिन्मित्राभिनन्दनोत्सवे वीरसिंहो भागस्वामी भवितुं नाशकत् । स यद्यपि प्राणभयान्मुक्तस्तथापि व्रणोपचारकेण भिषजा न मुक्तः।

इतो राणायनस्य गृहे कृतमङ्गलस्नानां क्षीराब्धितरङ्गधवलं दुकूलद्वयं परिदधानां सम्यगलङ्कृतां मङ्गलद्रव्योत्तरे पीठे समुपवेशितां मनोरमामुपास्थितसखीवर्गः अचालिषुर्मङ्गलगीतानि । कतिपयक्षणान् प्राचां निबन्धनेभ्यः। अनन्तरं कुतूहलवतीनां वृद्धानां स्त्रीणां प्रेरणेन पृथक्पृथगात्मकृतानि ।

मधुमती -

१७. "साधुसारिभिः सुलक्षैः स्नेहपूरितैः कटाक्षैः ।
प्रज्वलद्धनञ्जयायै मङ्गलं मनोरमायै ।।

पूर्णा -

१८. "आनने लसद्दमायै नेत्रयोर्वसद्रमायै ।
वाचिसन्नुतक्रमायै मङ्गलं मनोरमायै ।।

चन्द्रप्रभाा -

१९. "हारिवक्त्रवारिजायै सूरिमौलिधारितायै ।
अङ्गनाजनार्चितायै मङ्गलं मनोरमायै ।।

फलिनी -

२०. "साधुशीलमण्डितायै सर्वशास्त्रपण्डितायै ।
सत्सभास्वखण्डितायै मङ्गलं मनोरमायै ।।

अनन्तरं चतस्त्रश्च मङ्गलनीराजनं प्रज्वाल्य चतुर्दिशं नीराजनपात्रं धृत्वा राजकालीमुखं अद्राक्षुः । तासां दृष्टेराशयं ज्ञात्वा राजकाली - "मङ्गलं नीराजनगाने पद्यमुत्तममेकमेवालम् । तत्र पृथक्पृथगेकैकया पाद एकैको वक्तव्यः ।" इत्यादिक्षत् -

मधुमती -

२१. वीरधनञ्जयजीवितसख्यै

पूर्णा -

शौरिवधूपठनालयमुख्यै ।

चन्द्रप्रभा -

चित्तलसद्रवये विमलायै

फलिनी -

स्वस्तिमहाकवये महिलायै ।।

अनन्तरो विवाहकार्यकलापो विस्तरभयादत्र प्रकरणे न वर्ण्यते । क्षमन्तां पाठकाः एतावदुक्त्वा प्रकरणं समापयामः । मनोरमा-धनञ्जयस्यासीन्मनःप्रिया गृहिणी ।

## नवमं प्रकरणम्

# प्रथमं सन्दर्शनम्

सुमुहूर्तदिवसे मध्याह्ने सन्तर्पणभोजनादनन्तरं विशालाक्षरणन्धरौ पूर्णा च गृहान् प्रतिनिवृत्ताः । ते यावद्भवनस्य मध्यशालां प्रविश्योपाविक्षन् तावत्कश्चिद्रक्षिजनोऽन्तः प्रविश्य – "श्रीमान्नगरपालो द्वारमध्यास्ते । समागतो भवद्भिः सह सम्भाषितुम् ।" इत्यवादीत् रणन्धरः सम्भ्रमेण गत्वा सखायं विषणुशर्माणं करे गृहीत्वा गृहस्यान्तः प्रवेशितवान् । उत्थिता पूर्णा नगरपालाय पृथगासनमचीक्लृपत् । विशालाक्षश्च तं स्वागतेनाभिनन्द्य तत्रोपवेशितवान् । अनन्तरं स्वासने समुपविष्टो रणन्धरः । उपविष्ट एवास्ति विशालाक्षः नगरपालस्यानुरोधेन पितुरादेशेन च पूर्णापि निजासने समुपविष्टा । अन्तिके स्थिता पूर्णा विष्णुशर्मणा स्पष्टमदर्शि तस्याः सामुद्रिशास्त्रज्ञेन निपुणतरेण निर्मिता गजदन्तप्रतिमेव रमणीया सा मूर्तिः, नीलकुटिलालकचुम्ब्यमानललाटस्थलं रत्नदर्पणाकारं तन्मुखं पक्ष्मले तामरसपलाशविशाले ते लोचने व्यायामसंस्कृतानि लावण्यामृतवाहीनि तानि गात्राणि च विष्णुशर्मणश्चक्षुषोर्विस्मयमजीजनत् । न तस्याः केवलं गात्रसौष्ठवमालोक्य विस्मितो रणन्धरस्य सखा । अपि तु व्यायामनिष्पन्नं गात्रसंस्कारमालक्ष्याश्चर्यमगात् । प्रकृत्यैव सुन्दराणां तस्या अङ्गानां शोभां चतुर्गुणीकरोति व्यायामसंस्कृतिः ।

पूर्णा च परिपूर्णशरदिन्दुमण्डलविडम्बिवदनं रक्तान्तदीर्घनयनं

वन्यगजशुण्डानुकारि दीर्घबाहुदण्डं विशालवक्षोदेशं व्यायामविभक्त-दृढगात्रमासने समुपविष्टमासेचनकं सिंहसंहननं युवानमद्राक्षीत् । सा पितृनिर्दिष्टं निर्दुष्टाङ्गमात्मनो वरं युवानमालोकमाने नयने क्षणं न निवारितवती । क्षणः स गतः । न वृथा गतः । रागविरोधिनीं कन्यां कम्पयित्वा गतः । तदेव तस्याः प्रथमं विष्णुशर्मणः सन्दर्शनम् - तदेव प्रथमं विस्मयकारि सन्दर्शनम् । तदेव प्रथमं नयनहारि सन्दर्शनम् । तदेव प्रथमं हृदयद्रावकं सन्दर्शनम् ।

दशमं प्रकरणम्

## इयं सा शस्त्री

विष्णुशर्मा – (विशालाक्षमालोक्य) ''इयमेव किंश्रीमती सुगृहीतनामा तत्र भवतः पुत्री पूर्णा ?''

विशालाक्षः – ''अथकिम् ।''

विष्णुशर्मा – ''आर्य ! भवतः सन्निधौ कुत्रचित् भूतार्थसंशये तत्र भवतीति मां प्रष्टुमस्म्यागतः । तच्च राजकार्यम् । न मे व्यक्तिकार्यम् । अत्र मामनुज्ञातुमर्हत्यार्यः ।''

विशालाक्षरणन्धरौ – (आत्मगतम्) ''किं तद्राजकार्यम् ?''

विशालाक्षः – (प्रकाशम्) ''पृच्छतु तत्र भवान् ।'' (पूर्णामालोक्य) ''कथये श्रीमते नगरपालाय तेन पृष्टेऽर्थे यत्ते ज्ञातम् । विद्धि महाराजपरमेश्वर एव नगरपालमुखेन पृच्छतीति ।''

पूर्णा – (आत्मगतम्) ''तातः सूचयति मे प्रियो विष्णुशर्मा पृच्छतीति न त्वया मन्तव्यम् । शत्रुः प्रद्योतन एव पृच्छतीति ज्ञातव्यमिति । अयं च मम जागरूकतार्थ उपदेशः ।'' (प्रकाशम्) ''वदामि यन्मे ज्ञातं श्रीमता नगरपालेन पृष्टेऽर्थे । पृच्छतु श्रीमान् ।''

विष्णुशर्मा - "गत दशम्यां रात्रौ नगरप्रान्तारण्यस्थस्य वन-दुर्गालयस्यान्तिके श्रीमांत्सहस्त्रपतिवीरसिंहः केनापि प्रहृत इति विदितमेव स्यात्तत्र भवत्याः ।"

इत्यर्धोक्ते विरम्य नगरपालो निशितदृशा पूर्णामुखं निर्वर्णितवान् । तत्र सम्भ्रमः कश्चन तेन दृष्टः ।

पूर्णा - "विदितम् ।"

विष्णुशर्मा - "तं सम्प्रत्युपचरति वैद्यः । प्रायः प्राणापायदशानिवृत्तेति वक्तव्यम् ।"

इत्यर्धोक्ते पुनर्विरम्य नगरपालो यथापूर्वं पूर्णामुखं निर्वर्णितवान् । तत्र तेन सूक्ष्मदृशा सन्तोष एव दृष्टः ।

विशालाक्षः - "प्रियं मे प्रियं मे । मम सख्युर्जम्बुकस्य स एक एव पुत्रः ।"

रणन्धरः - "इयं प्रिया मे वार्ता । यत्सखा वीरसिंहः प्राणापायदशातो मुक्तः ।"

पूर्णा - "ममापि प्रियमिदम् । यन्मे न वा सखी विलासवती जीवन्तं भ्रातरमालोक्य सन्तुष्यति ।"

विष्णुशर्मा - "विधेरयमनुग्रहः । अथवा प्रहर्तुः यत्सहृद्य प्रहृत्य बाहौ प्रहृतवान् ।"

इति पूर्णां पश्यति ।

अलसहासभासुरवदनाऽभूत्पूर्णा । स हासो बहुलमचकथन्नगरपालाय विषयम् । तावता न जोषमासीत् । अप्रस्तुतं च किञ्चिदकार्षीत् । जयन्त्युत्सवसभायां दूराद्दर्शनेन या जाता सम्प्रति स्पष्टदर्शनेन या प्रभूता तां विष्णुशर्मणश्चक्षुःप्रीतिं मनःसङ्गाय नेतुं प्रयतितवान् । अभूदर्धचरितार्थः ।

विशालाक्षः - "अभिवृद्धिप्रवणं वीरसिंहस्य जीवितवृत्तम् । लब्धा सहस्रपतिपदवी । सिद्धश्च मातुलः सम्पत्पूर्णां कन्यां दातुम् । यदि स जीवेद्युवा विधिरुचितदर्शीति वक्तव्यम् ।"

विष्णुशर्मा - (स्वगतम्) "भवतो दुहितोचितदर्शिनीति वक्तव्यम् । यदि ममानुमानं सत्यम् (प्रकाशम्) "भद्रे ! वैशालाक्षि तस्मिन्नेव दिने भवती देववाटिकातो गिरिव्रजमागतेत्यस्माभिर्ज्ञातम् । किमिदं सत्यम् ?"

विशालाक्षः - (स्वगतम्) "किं वत्सा पूर्णा वीरसिंहं प्राहरदिति नगरपालो मन्यते ? तथैव दृश्यतेऽस्य विचारणधोरणी ।"

पूर्णा - "सत्यम् ।"

विष्णुशर्मा - "मन्ये ; पतितो वीरसिंहो भवत्या दृष्टः ।"

पूर्णा - (स्वगतम्) "अत्र सत्यमेव वदामि नगरपालस्याग्रे ।" (प्रकाशम्) "दृष्टः ।"

विशालाक्षः – (स्वगतम्) "आश्चर्यम् । न मह्यमचकथत्किमपि पूर्णा ।"

विष्णुशर्मा – "मन्ये ; भवत्यैव स उपचरितः कालोचितेनोपक्रमेण ।"

पूर्णा – "सत्यम् ।"

विशालाक्षः – (स्वगतम्) "श्लाध्यं वत्सायाः कर्म ।"

विष्णुशर्मा – "अथाल्पावशेषमेवास्ति प्रष्टव्यम् । भद्रे ! किं तदपि पृच्छामि ? अथवा भवत्येव वदत्वपृष्टा ।"

पूर्णा – "आर्य ! भवानेव पूरयतु कथाशेषम् । पश्यामि धियोविलसितं भगवत्याः ।

विष्णुशर्मा – "तदा भवत्य गच्छद्वनदुर्गालयम् । स तत्र भवतीं गतां दृष्ट्वा प्रायो दुरुद्देशेन गत्वा द्वारमाक्रान्तवान् । द्वारस्थोऽन्तः स्थितां भवतीं बलात्कर्तुं यतमानो भवत्याऽसिधेनुकया दण्डितः । इदं ममानुमानम् । किमिदं सत्यम् ?"

पूर्णा – "अक्षरशः सत्यम् ।" इति सर्वं वृत्तं यथावद्विस्तरेणावादीत् । अप्राक्षीच्चैवम् । "आर्य ! कथमिदं भवता ज्ञातम् ?"

विष्णुशर्मा – "भद्रे ! शोधयतो ममाश्रमस्य द्वारदेशे मिलिताः काचवलय-शकलाः । तदा संशयोऽभवन्मे नार्याः कृत्यमिदं किमिति । अनन्तरं परिशोधितवानस्मि तदनुसारेण । ज्ञातं तस्यां रात्रावेव भवत्या इहागमनं

सख्युर्गृहदासद्वारा । तादृशं सायुधं पुरुषं प्रहर्तुं शस्त्रविद्यायां शिक्षितैव नारीप्रभवेन्नान्येति बुद्धिरेव प्रथमं भवतीं प्रत्यनुधावने कारणम् । अहं श्रुतितो जानामि प्रियसखेन रणन्धरेण सह भवती शस्त्रविद्यासु शिक्षितेति । अथात्र सम्प्रति भवत्याः पाणिं दक्षिणं वामपाण्यपेक्षया विरलवलयमणिबन्धमालोक्य निजमनुमानं प्रत्यक्षवन्निश्चितवानस्मि ।''

पूर्णा – ''अद्भुता परिशोधनवैखरी ।''

विशालाक्षरणन्धरौ पूर्णोक्तां कथामाकर्ण्य तस्याः प्राप्तकालं पराक्रममालक्ष्य सन्तुष्टौ । विष्णुशर्मणः परिशोधनचातुर्यमाकलय्य विस्मतौ च भवतः ।

विष्णुशर्मा – ''भद्रे ! तां शस्त्रीमेकदा द्रष्टुमिच्छामि । यया स्वामिन्याः संरक्षितं मानम् । शिक्षितः शास्त्रातिगो दृप्तो वीरः ।''

अथ पूर्णान्तर्गत्वा तां शस्त्रीमादाय नगरपालायादीदृशत् । अवादीच्चैवम् । ''आर्य ! इयं सा शस्त्री । अधुनाप्येषा न क्षालिता । इमां रहसि पूजयामि देवताप्रतिमामिवात्मनो मानस्य त्रात्रीम् । महोग्रस्य वीरस्य जेत्रीम् ।''

विष्णुशर्मा – ''तदेव युक्तम् ।''

पूर्णा – ''शिरसा गृह्णामि हितैषिणोर्वचनम् ।''

विशालाक्षः – ''मन्ये ; अन्यथैव वाङ्मूलं दत्तवांत्सहस्रपतिः ।''

विष्णुशर्मा – "अथकिम् । स केन मुखेन यथार्थं कथयितुं पारयेत् ? गजवीर एव किल देवतालयं प्रविशन्तमात्मानं ग्रहणभयादसिधेनुकया प्रहृत्य पलायितः । पथिकः कश्चिद्ब्राह्मणः किल स्वस्य भेषजोपचारम् अकार्षीत् । स च किलाज्ञातपूर्वः एतावत्तेन दत्तं वाङ्मूलम् ।"

पूर्णा – "किं गजवीरं जानाति सहस्रपतिः ?"

विष्णुशर्मा – "एकदा स्वस्य गृहेषु चौर्याय किल समागतो गजवीरः । तं किल स्वयं दृष्टवान् गृहारामे सहस्रपतिः । प्रकृतकथाया इयं कथा ज्येष्ठभगिनी स्यात्प्रायः सत्यत्वे ।"

पूर्णा स्मयते । तेन पूर्णायाः सुतरां विशदेन हासेन सुधयेवाभिषिक्ते विष्णुशर्मणो नयने। विश्वस्य सार्वभौमो गजवीरस्य स्थानमन्वेष्टुं राष्ट्रियमाज्ञप्तवान् । तस्य वनदुर्गालये सन्दर्शनान्नगरप्रान्तारण्ये तत्समीपे वा तस्य स्थानं स्यादिति साधारणमनुमानं सार्वभौमस्य । श्रीमान् राष्ट्रियो जाम्बुकिं जानाति तत्त्वतः । तस्मात्तत्कल्पितकथायाः सत्यत्वं शोधयितुमेव मामाज्ञप्तवान् राष्ट्रियः । ज्ञातं तस्य सत्यत्वम् ।"

पूर्णा – "आर्य ! अहमेकं याचे तत्र भवन्तम् । एतत्कथानकं तत्र भवता बहिरङ्गं न कार्यम् ।"

विष्णुशर्मा – "राष्ट्रियायै कस्मै कथ्यते । न बहिरङ्गं क्रियते ।"

पूर्णा – "यदि राष्ट्रियः सार्वभौमाय कथयेत्तर्हि महान् कोलाहलः स्यात् ।"

विष्णुशर्मा - "राष्ट्रियो यथा न कस्मैचित्कथयेत्तथाहं करिष्यामि व्यवस्थाम् । विश्वसितु मामत्र भवती ।"

पूर्णा - "सन्तुष्टाऽस्मि ।"

रणन्धरः - "ईदृशस्य हस्ते सुजनस्तुत्यचरित्रा सुलक्षणा कुमारी मा निपातीत् ।"

विष्णुशर्मा - "सर्वेभ्योऽप्यधिकं जानाति ज्ञानाधिकः सेनापतिर्वीरसिंहस्य तत्त्वम् । स रक्षेद्भागिनेयीं यथा नेदृशस्य हस्ते पतेत् ।"

विशालाक्षः - "सत्यम् ।"

एतावत्तत्र सम्भाषणं संवृत्तम् । अथ पूर्णा शस्त्रीं प्रक्षाल्य पुनरेकदा विष्णुशर्मणे प्रादीदृशत् । अचेतनापि सा दूतीव विष्णुशर्माणं पूर्णाप्रवणचित्तं कर्तुमचेष्टिष्टेव ज्वालाभिः अभाषिष्टेव ज्वालाभिः ।

एकादशं प्रकरणम्

## निशम्भोः प्रथमदुर्गपतनम्

प्रद्योतनस्य राजधानीस्थं मूलबलं पञ्चाशत्सहस्राणीति प्रागेवावेदितम् । तत्र दशदलानि भवन्ति । एकैकस्मिन्दले चत्वारि सहस्राणि पत्तीनामेकं सहस्रमश्वानां चेति मुख्यं मानम् । शतं रथाः शतं गजाश्चेति तस्यानुबद्धसैन्यं भवति । दलस्य पतिर्दण्डनायक उच्यते । मूलबले दश दण्डनायकाः सन्तीत्युक्तं भवति ।

दशानां दण्डनायकानां दशसंस्थानानि सन्ति । तस्मात्ते सामन्तपद-लाञ्छनाश्च । संस्थानवद्दण्डनायकपदव्यश्च वंशपरम्परायत्तास्तत्काल-निबन्धनमनुसृत्य । अस्ति कश्चिद्विशेषः । यदि सामन्तः शस्त्रविद्यायाम् अशिक्षितः स्यात्सार्वभौमः दण्डनायकत्वेन कञ्चिदर्हमन्यं नियुञ्जीत । तस्य वेतनं तु सामन्तेन देयम् । सामन्त एव यदि स्वयं दण्डनायक-स्तस्य नास्ति पृथग्वेतनम् ।

दशसु सामन्तेष्वेकः सर्वसेनापतिः कर्तव्य इति नियमः । सेनापतेर्दलस्य दण्डनायकं सेनापतिरेव नियुञ्जीत । तस्मै वेतनं च स एव दद्यात् ।

इन्द्रसेनः शिवनाथो विषमसिद्धिर्हरिमित्रस्तारानाथो रिपुञ्जयो वीरमित्रो यज्ञदत्तो मेघवाहनो रुचिराश्वश्चेति प्रद्योतनस्य मूलसामन्ताः ।

इन्द्रसेनः सर्वसेनापतिः । स निजे दले विषमसिद्धेः पुत्रं सर्वसिद्धं दण्डनायकत्वेनाधिकृतवान् । शिवनाथो महामन्त्री । तस्य दले तस्य पुत्रो हरनाथ एव सम्राजा नियुक्तः । हरिमित्रः कोशाध्यक्षः । तस्य दले तस्य पुत्रः सिंहवाहन एव सम्राजा नियुक्तः । अन्ये सामन्ताः स्वयं दण्डनायकाः ।

एतेभ्यो दशभ्योऽतिरिक्तौ द्वावन्यौ सामन्तवंशौ स्तो राजधान्याम् । तयोः संस्थाने त्वङ्गराष्ट्रे । तत्र प्रथमे वंशे कीर्तिशेषस्य सत्यसेनभ्रातुश्चित्रसेनस्य पत्नी देवसेनैव सामन्ती । तस्या दळं नियन्तुं जयकेतुर्नाम वृद्धवीरोऽधिकृतः । यदा देवसेनायाः कृत्रिमदुहितुः सुलक्षणायाः परिणयः स्यात्तदा तद्भर्त्रे दण्डनायकपदव्या सह संस्थानं दातव्यमिति सार्वभौमस्य निर्णयः । शस्त्रविद्यासु सुशिक्षितायैव दातव्या सुलक्षणेति च सार्वभौमस्यादेशः । अथ द्वितीयस्य संस्थानस्य सामन्तो यशोधरः । यः फलिन्याः पितृव्यस्थानीयो ज्ञातिः । स स्वयं दण्डनायकश्च भवति । तावेतौ जयकेतुयशोधरौ दण्डनायकौ सम्प्रति राजपुत्रस्य विश्वसारस्य हस्ते । यत्सार्वभौमेनाङ्गानां राजसेनासम्बन्धाद्विश्वसार एव प्रभुः प्रकटितः ।

जयकेतुना पाल्यमान एव दले भ्रामर्या अग्रजः सुकर्मा सहस्रपतिः । सर्वसिद्धिना पाल्यमाने रुद्रसेनः । रिपुञ्जयस्य दले धनञ्जयो वीरसिंहश्च । एते चत्वारः पाठकानां परिचिताः सहस्रपतयः ।

अवसितोऽस्य प्रकरणस्य पूर्वाङ्गभूतः सैन्यप्रस्तावः । न केवलमस्य प्रकरणस्य । उत्तरस्याश्च कथायाः । प्रकृतमनुसरामः । गता उत्सववन्तो मनोरमाधनञ्जययोः परिणयदिवसाः । वीरसिंहः प्रायेण स्वस्थः संवृत्तः ।

पूर्णं रोपणं व्रणस्य सावशेषम् । तथापि सञ्चरितुं क्षमते । कौलिकसङ्घ-रहस्यसम्पादनाय प्रयतमाना फलिनी जयस्य सन्निकृष्टेवाभूत् ।

विष्णुशर्मा तेषु दिवसेषु परन्तपसङ्घशोधनकर्मणि मग्नो रात्रिंदिवम् । आयाता चैत्रकृष्णपञ्चमी । तस्मिन्दिने नगरपालः परन्तपसङ्घस्य दुर्गमेकमभेत्सीत् । मुख्यं दुर्गमेवाभेत्सीत् ।

किं तत्? सामन्तरुचिराश्वस्य मन्दिरम् । तत्र मन्दिरे सङ्घस्य पुस्तकमेकं बहूनि गूढपत्राणि च मिलितानि ।

अस्मिन्भेदने किं द्वारमभून्नगरपालस्येति पाठकाः पृच्छेयुः । स जयन्त्युत्सवसभायामुपस्थितां वीरिणीं परन्तपसम्बन्धिनीति शङ्कितवान् । तदेव प्रथमं द्वारम् । ततस्तस्याश्चर्यां निपुणं शोधयितुम् आरब्धवान् । सा श्मशाने रात्रौ चरन्ती दृष्टा । अस्थिखण्डमालया जपन्ती दृष्टा । कपालपात्रेण मद्यं पिबन्ती दृष्टा । तेन सा कापालिकी राक्षसीति निश्चितवान् । राक्षस्याः श्रीनाथोपस्थाने केनापि गूढेन हेतुना भवितव्यम् । पट्टणे सङ्घकार्यार्थमागतां यथा राष्ट्रियो न शङ्केत तथा कर्तुमेव तत्कपटोपस्थानमिति स निरचैषीत् । इतः प्रागपि सा द्विवारं श्रीनाथमुपस्थातुमागता । आत्मानं विधवामनपत्यां विरक्तां ब्राह्मणीमकथयत् । शिष्या चाभवत् । तच्च कपटस्यास्य पूर्वाङ्गमिति स व्यज्ञासीत् । अनन्तरं तस्याः स्थानानि शोधयितुमारब्धवान् । चत्वारि तस्याः प्रियाणि स्थानानि ज्ञातानि । अपराजितामठ एकम् । तत्रैव तस्या अशनाच्छादनशयनादिदैनन्दिनक्रियाकलापः । विशोकामठो द्वितीयम् । तत्र तस्याः कथासम्भाषणानि । भट्टपादानां गृहं तृतीयम् तत्र गुरुपत्न्याश्चरणशुश्रूषैव कार्यम् । सामन्तरुचिराश्वस्य भवनं चतुर्थम् ।

तत्रक्रियैव विष्णुना न ज्ञाता । अन्ततः आत्मनश्चर्याया अकलङ्कत्वद्योतनायैव त्रीणि पवित्रस्थानानि । चतुर्थं स्थानमेव गुप्तकार्यरङ्गमिति स निर्धारितवान् । सर्वमेतदात्मानुमानं राष्ट्रियद्वारा सार्वभौमाय निवेद्य रुचिराश्वभवनं शोधयितुमाज्ञापत्रं लब्धवान् ।

शोधितवान् पञ्चम्यां प्रातः । लब्धवान् यथोक्तामपराधनिरूपकसामग्रीम् सामन्तो रुचिराश्वः । तस्य दले पूर्णं सहस्रमेकं सनायकं योधानाम् । तस्य गृहे परन्तपसङ्घधनत्वेन ज्ञातं सुवर्णनां लक्षद्वयं चाग्राहिषत विष्णुशर्मणा ।

तत्र कोलाहले प्रथमं विष्णुं हन्तुमेव सामन्तप्रेरिताः केचिद्योधाः प्रवृत्ताः । कतिपयक्षणान्युद्धमभूत् । मितानुयायिनोऽपि विष्णोरेव हस्त उपर्यभूत् । अन्तरायकारिणो हताः । एतावत्यन्तरे सर्वसिद्धिसिंह-वाहनयोर्दले समागते । यत्प्रागेव तादृशः सन्नाहो विष्णुशर्मणा कृतः । अनन्तरं यथोक्तमपराधिग्रहणकार्यं धनग्रहणकार्यं च सुकरे अभूताम् । एकं वक्तव्यं विस्मृतमस्माभिः। अपराजिता मठस्था वीरिणी च गृहीताऽभूद्रक्षिभिः । एवं निशम्भोः प्रथमं दुर्गं पतितम् ।

## द्वादशं प्रकरणम्

# विष्णोः सकरुणस्वार्थत्यागवैखरी

पञ्चम्यां मध्याह्नभोजनादनन्तरं विष्णुशर्मा राष्ट्रियं सत्यरथं द्रष्टुं गतः । राष्ट्रियस्यापि भोजनं तदैव संवृत्तम् । आगतं नगरपालं स्वागतेनाभिनन्द्य सत्यरथः सम्भाषितुं विविक्तां कुटीं नीतवान् । तत्रोपविष्टौ तौ पृथगासनयोः ।

विष्णुशर्मा - "आर्य ! किं निश्चितं राजसदसि ?"

सत्यरथः - "शिवनाथसोमनाथौ सर्वेषां च वधः क्रियतामिति दृढं समवादिष्टाम् । दण्डनायकस्य सहस्रपतेर्दशानां शतपतीनां चेति द्वादशानामेव वध उचितः इतरेषां कारागृहवासशिक्षैवालमिति मयोक्तम् । अन्ततः सार्वभौमस्तयोरेव मतं प्रायेण स्वीकृतवान् । एतावन्मन्मुख-प्रीत्यर्थमुक्तवान् । स्वयं महामन्त्रिणा महाप्राड्विवाकेन च युक्तो विचार्याल्पापराधत्वेन निर्धारितान्कारागृहं प्रेषयामीति नगरपाल ! स्पष्टं भावि दुरदृष्टवतां तेषां राजद्रोहिणाम् । मुच्येरन्ये केचित्पञ्चषा एव वधदण्डात् । अहं जानामि महामन्त्रिणोऽपि कठिन ईदृशेषु सन्दर्भेषु महाप्राड्विवाकः ।"

विष्णुशर्मा - (सनिश्वासम्) "किं सर्वे हन्येरन् ? बुद्धिहीनास्ते । यावन्मरणं युद्धे कर्तव्ये मरणादेव भीता अस्माकमभूवन्वशे । एवं

गतेऽपि तान्न त्यजतीव मृत्युदेवी ।" (स्वगतम्) "तेषामीदृशस्य निकृष्टसाङ्घिकमरणस्याहमेव हेतुः । धिगेतां पापजीविकाम् ।"

सत्यरथः – "क्षत्रियधर्ममवलम्बमानावपि नौ न त्यजति जन्मसिद्धा ब्राह्मणप्रकृतिः । तस्मादीदृशेषु सन्दर्भेषु विषीदावः ।"

विष्णुशर्मा – "किं क्षत्रियधर्मस्तावान्क्रूरः । न । यदि स एकान्ततः क्रूरस्तर्हि कथं धर्मः स्यात् ?"

सत्यरथः – "नगरपाल ! भवतः कृत्येन कश्चिदस्ति दोषः । यदि सम्राजो धर्मासनं काठिन्यं वहेत्तत्र वयं किं कर्तुं प्रभवामः ? दारुणैव भवति दण्डनीतिः । औदार्यं च तत्र दर्शयितुं नाशक्यम् । राज्ञः प्रकृतिमवलम्ब्य स्यात्स विषयः ।"

विष्णुशर्मा – "रुचिराश्वसंस्थानस्य का गतिश्चिन्तिता ?"

सत्यरथः – "रुचिराश्ववंशादाच्छेत्तव्यमेव तदिति सामान्यतो राजसदसोऽभिप्रायः । तथापि निर्णयस्तु धर्मासनायैव विसृष्टः । धर्मासनं च तत्सार्वभौममहामन्त्रिभ्यां सनाथमिति जानाति भवान् । अथ किं वक्तव्यम् ? पतितः स्यादतीव पुरातनः सामन्तवंश एकः ।"

विष्णुशर्मा – "निरपराध एव रुचिराश्वस्य पुत्रो जवनाश्वः । स ह्यप्रौढः पञ्चदशवर्षदेशीयः" ।

सत्यरथः – "द्रष्टव्यम् । यदि रुचिराश्वस्य पत्नी पुत्रस्यार्थे धर्मासनस्य

पुरो वादं कारयेत् तदा किं पर्यवसानं स्यादिति ।"

विष्णुशर्मा – "आर्य ! विषण्ण इव दृश्यते ममान्तरात्मा । धर्मो वा भवत्वयम् । अधर्मो वा । अहमेवात्र हेतुः सहस्राधिकानां मरणे । एकस्य महावंशस्य पतने च । तथापि शास्त्रातिगदुष्टचेष्टस्य निशम्भोर्दुर्गमेकं पतितमिति मनसः क्वापि कोणे स्फुरति किञ्चित्सन्तोषज्योतिः ।"

सत्यरथः – "अन्यद्भवता किमपि श्रोतव्यमस्ति यद्राजसदसि वृत्तम् ।"

विष्णुशर्मा – "किं तत् ?"

सत्यरथः – "भवते श्रेष्ठं किमप्युपायनं दातव्यमिति राजसदसा निर्णीतम् ।"

विष्णुशर्मा – "मह्यमुपायनम् ? किमिव तत् ?"

सत्यरथः – "यथा सम्प्रदायं दशमं संस्थानं स्थातव्यमेवेत्यत्र राजसदोऽभूदेकाभिप्रायम् । दण्डनायकपदव्या सह तद्भवते दातव्यमित्येकं सूचनम् । यदि तदिच्छति भवान् मम स्वस्रा पद्मावतीदेव्या चक्रवर्तिना च प्रीतिपूर्वकं परिपाल्यमाना माता पितृहीना निर्मला नाम विप्रकन्या भवता परिणेतव्या स्यात् । तामात्मनः कृत्रिमां पुत्रीमेव मन्यते सार्वभौम इत्यद्य राजसदसि स्पष्टमभूत् । इदं सापेक्षं सूचनं यदि नाङ्गीकरोति भवान् पञ्चविंशतिं सहस्राणि सुवर्णानां गृह्णात्विति द्वितीयं सूचनम् । इदमपि भवतो यदि नावर्जकं स्यात् । कञ्चिच्छ्रेष्ठमधिकारं गृह्णात्विति तृतीयं सूचनम् ।"

विष्णुशर्मा – "एतेषु त्रिषु कस्य किं वा सूचनं राजसदसीति ज्ञातुमिच्छामि ।"

सत्यरथः – "संस्थानमेव दातव्यमिति मया सूचितम् । तदङ्गीकुर्वता सार्वभौमेन निजकृत्रिमपुत्रीपरिणयस्य संस्थानाधिपत्यस्य च ग्रन्थिबन्धः कृतः । धनं दातव्यमिति सोमनाथस्य सूचनम् । कश्चिदुन्नताधिकारो दातव्य इति महामन्त्रिणः ।"

विष्णुशर्मा – "कीदृशः स उन्नताधिकारः ?"

सत्यरथः – "सम्प्रति महाप्रतीहारी सुतरां वृद्धो विजयकेतुः । तत्र पदव्यां योग्यमन्यं नियोक्तुं सार्वभौमस्यास्ति सङ्कल्पः । वर्तते सैका स्पृहणीया पदवी । सर्वदलस्थान् गजानेकीकृत्य पृथग्गजदलं सर्वदलस्थान् रथानेकीकृत्य पृथग्रथदलं च कर्तव्ये इति सम्राजो मतिः । तयोर्द्वावधिकारिणावपेक्षितौ । ते द्वे पदव्यौ । इदं त्रयमित्येव न । अनाक्रान्तं यं कञ्चिद्राजकीयमुन्नतमधिकारं तुभ्यं दातुं सिद्धः सम्राट् । यं भवानिच्छेत् ।"

विष्णुः सर्वं श्रद्धयाऽऽकर्णितवान् । अस्मिन्नन्तरे कश्चिद्राजपुरुष आगत्यमहासभायै तयोरुभयोः सार्वभौमस्याह्वानं न्यवीविदत् । सम्भ्रमादुत्थितौ तौ महासभामण्डपमगमताम् ।

उपविष्टः सिंहासने सम्राट् । भ्राजन्ते तस्योभयोः पार्श्वयोरष्टावासना-न्यष्टानां मन्त्रिणाम् । महामन्त्रिणोऽन्तरङ्गसचिवस्य कोशाध्यक्षस्य महासमाहर्तुश्च दक्षिणतः । सेनापतेर्महाप्राड्विवाकस्य राष्ट्रियो गत्वा निजमासनमलङ्कृतवान् । विशालाक्षस्याग्रजो भुजगेन्द्रो महासमा

समाहर्ता । अन्ये त्वितः प्रागेव पाठकानां विदितनामानः । सिंहासनस्य पुरस्तादुभयोः पार्श्वयोर्नव दण्डनायकौ इतरैश्च बहुभिरधिकारिभिः पुरप्रमुखैश्च महासभा सम्पूर्णा । मन्त्रिणां दण्डनायकानां च मध्ये वामतः पृथगासनमेकं नगरपालाय कल्पितम् । महाप्रतीहारी स्वयमुत्थाय सभामागतं नगरपालं स्वागतेनाभिनन्द्य करेण गृह्णंस्तस्मिन्नासने तमानीयोपवेशितवान् । नगरपालाय कृतं तन्महद्गौरवं पश्यतोर्भवशर्मदेवशर्मणोर्नयनानि चरितार्थानीवाभूवन् । इतःप्राक् चन्द्रप्रभाया अविधेयतया दूनं भवशर्मणो मनः सम्प्रति पुनरुत्साह-प्रफुल्लमभूत् ।

सभायां पूर्णायां सार्वभौमो मेघगम्भीरेण ध्वनिना सभाभवन-मापूरयन्नगरपालमभिलक्ष्येदमवादीत् ।

"नगरपाल ! अद्य प्रातस्त्वया वीरपुरुषोचितं प्राज्ञपुरुषानुरूपं चाद्भुतं राजकार्यं यत्कृतं तेन सन्तुष्टं राजसदस्तुभ्यं किमपि श्लाघ्यमुपायनं दातुमिच्छति – "

भवशर्मा – (स्वगतम्) "सम्प्रति द्रष्टव्यं सार्वभौमस्यौदार्यम् ।"

प्रद्योतनः – "त्रीणि वयं सूचयामः । तत्रैकं वरयतां भवान् । दण्डनायकपदव्या सह किमपि संस्थानं प्रथमम् – "

भवशर्मा – (स्वगतम्) "अयमोदार्यस्य परमावधिः सम्राजः । भाग्यस्य परमावधिर्वत्सस्य विष्णोः ।"

प्रद्योतनः – "तत्रैकोऽस्ति समयः । अस्माकं कृत्रिमा पुत्री वत्सा निर्मला त्वया परिणेतव्या" ।

भवशर्मा – (स्वगतम्) "सुकरोऽयं समयः । किं वा वदेदस्माकं विष्णुः ? यदि बुद्धिमानेतदेवाङ्गीकुर्यात् ।"

प्रद्योतनः – "यद्येतदुपायनमनभिमतं ते कन्यान्तरासक्तमनसः; न वयं प्रतिबध्नीमः । गृह्णन्वामुपायनत्वेन पञ्चविंशतिः सहस्राणि सुवर्णाः ।"

भवशर्मा – (स्वगतम्) "क्व संस्थानम् ? क्व पञ्चविंशतिसहस्रं सुवर्णानाम् ? निर्मलापरिणेतव्येति हेतोर्यदि संस्थानं विहायेदम् अल्पमुपायनं गृह्णीयाद्विष्णुस्तर्हि नास्मादल्पप्रज्ञो जायेत ।"

प्रद्योतनः – "यदि धनेनापेक्षया कमुन्नतमधिकारं कामयसे तं ते दास्यामः । अस्माभिः पृथक्चिकीर्षिते रथदले पतिरेकोऽपेक्षितः । एवं गजदले । महाप्रतीहार्यधिकारं चाचिरात्त्यक्ष्यति विश्रान्त्यर्थी वृद्धो विजयकेतुः । सोऽस्त्येकोऽधिकारः । इदं त्रयमित्येव न । यः कश्चिदनाक्रान्तो महोन्नतो राजकीयाधिकारस्तवेष्टः स्यात्सोऽपि तुभ्यं नादेयः । एतेषां संस्थानद्रविणाधिकाराणामन्यतमं वरय वरम् । पूर्वः सापेक्षः । अन्यौ निरपेक्षौ ।"

भवशर्मा – (स्वगतम्) "तृतीयाद्द्वितीय एव वरम् ।"

सभा सर्वा निभृता । उत्सुका श्रोतुं विष्णोः प्रत्युत्तरम् । अथ विष्णुशर्मोत्थाय प्राञ्जलिः सार्वभौममालोक्यैवं प्रार्थितवान्।

“महाराजपरमेश्वर ! धन्योऽहं यद्देवतेव मे वरं दातुं भट्टारक उद्यतः । देव ! निरपेक्षं दित्सितमपि नाहं संस्थानं याचे –”

भवशर्मा – (स्वगतम्) “हा हतोऽसि मन्दभाग्य ! हतोऽसि।”

विष्णुशर्मा – “न वा सुवर्णान् ।”

भवशर्मा – “(स्वगतम्) “तव ललाटे दास्यमेव लिखितम् ।”

विष्णुशर्मा – “अहं याचे वरप्रदं सार्वभौमं कतिपयकालप्रयुक्तं कमपि महोन्नतमधिकारम् ।”

भवशर्मा – (स्वगतम्) “अरे ! बुद्धिहीन ! कतिपयकालप्रयुक्तम् ? न स्थिरम् ?”

प्रद्योतनः – (साश्चर्यम्) “क इव स कतिपयकालप्रयुक्तो महोन्नतोऽधिकारः ?”

विष्णुशर्मा – “सह दण्डनायकेन सामन्तरुचिराश्वेन सह सहस्रपतिना वीरसेनेन सह परिव्राजिकया वीरिण्या ये गृहीताः सहस्रं योधाः तान्विचार्य यथापराधं दण्डं दातुं रुचिराश्वसंसथानस्य भाविनीं च गतिं विचार्य निर्धारयितुं यदस्ति बद्धव्यं धर्मासनं तन्मयैकेन बध्यताम् । तत्र सर्वविधो मम निर्णयः सार्वभौमेनाङ्गीक्रियताम् । इममेव कतिपयकालप्रयुक्तं महोन्नतमधिकारं वरत्वेन वरयामि वरप्रदं भट्टारकम् ।”

सत्यरथः - (स्वगतम्) "साधु विष्णो ! साधु त्वमेको महान्पुरुषः स्वार्थत्यागी धर्मरक्षैकतत्परमतिर्विशालेऽस्मिन्भूमण्डले ।"

इन्द्रसेनः - (स्वगतम्) "धन्या सा या त्वामीदृशं स्वार्थत्यागिनं सुषुवे ।"

विषमसिद्धिः - (स्वगतम्) "धर्मार्थमिवेमं वरं वरयते विष्णुः । जानाम्यहमेतम् । अस्यार्थादपि धर्म एव प्रियः ।"

भवशर्मा - (स्वगतम्) "अत्र वरे काकिण्यपि नास्त्यात्मलाभः । उन्मत्तस्येवायं वरः ।"

प्रद्योतनः - (स्वगतम्) "करुणाप्रयुक्तोऽयं साधोर्वरः । दास्यामि वरमेतमस्मै यथा प्रतिश्रुतम् । नचेदपकीर्तिः स्यादस्माकम् । अनेन वरेण नास्य कश्चिल्लाभः । तस्माद्ददामि द्वितीयं च वरमयाचितमप्यस्मै । ईदृशाः समर्थाः प्रोत्साहयितव्याः ।" (प्रकाशम्) "नगरपाल ! दत्तस्त्वया वृतो वरः । (महाप्राड्विवाकमालोक्य) आर्य ! अस्मिन्नेव दिने बध्यतां भारद्वाजेन विष्णुशर्मणैकेनापराधिनो विचारयितुं धर्मासनम् । यावन्निर्णयमयं प्राड्विवाकत्वेनास्माभिर्नियुक्तः ।"

सत्यव्रतः - "यदाज्ञापयति देवः ।"

प्रद्योतनः - (विष्णुमालोक्य) "नगरपाल ! अन्यं च वरं ददामि ते । अनेन वरेण तव न कश्चिदस्ति लाभः । तुभ्यं यं कञ्चिल्लाभमकृत्वा नास्माकं तृप्यत्यन्तरात्मा । प्रेषयामः पादलक्षं सुवर्णानाम् । गृह्यन्तां त्वया मम सन्तोषाय ।"

भवशर्मा - (स्वगतम्) "अहो वदान्यत्वं चक्रवर्तिनः ।"

सत्यरथः - (स्वगतम्) "उचितं कृतं भट्टारकेण ।"

विष्णुशर्मा - "महान्प्रसादः ।"

समाप्ता सभा । औदार्यप्रदर्शनजनिताशयेन गतः सार्वभौमः । सत्यरथपक्षविजयजनितासूयया गतो महामन्त्री । हस्तप्राप्तं सार्वभौमेन सह धर्मासने समुपवेशनभाग्यं गलितमिति वैमनस्येन गतो महाप्राड्विवाकः । विष्णुशर्मण्यादरातिशयेन गतो सत्यरथधनञ्जयौ । प्रेमातिशयेन गताविन्द्रसेनविषमसिद्धी । संस्थानाप्राप्तिदुःखमिश्रेण सुवर्णलाभसन्तोषेण गतो भवशर्मा ।

त्रयोदशं प्रकरणम्

## धर्मासननिर्णयः

भानुरिवोदयाद्रिं विष्णुर्धर्मासनमारूढवान् । मगधसाम्राज्यचरित्रे जरासन्धादारभ्याद्यावधि न कोऽपि तादृशो महापुरुषो धर्मासनमारूढः । द्वे एव तेन तुलयितव्ये धर्मासने । एकं जानकीजानिनारूढं साकेतधर्मासनम् । अन्यद्धर्मराजेनारूढमिन्द्रप्रस्थधर्मासनम् ।

यथाविध्यपरिधिनां विचारणं संवृत्तम् । प्रभुत्वस्य पक्षे राष्ट्रियः सत्यरथः कार्यमचीचलत् । अपराधिनां पक्षे रुचिराश्वस्य संस्थानसर्वाधिकारी भार्गवो विनतः । रक्षिप्रमुखस्य धर्मासनाधिकारं कश्चिदपराधी यद्यप्याक्षिप्तवांस्तथापि विनतेन विष्णुशर्मणि विश्वासे प्रकटिते स आक्षेपः परिहृतः ।

विचारणं विस्तरेण वक्तुं नायं प्रकरणांशो विचारणप्रधानः । एतावद्वक्तव्यमुच्यते । सत्यरथोऽपराधिनामपराधं सम्यङ्निरूपयितुं प्राभूत् । विनतस्ताननपराधान्निरूपयितुं नाशकत् । बालो जवनाश्वो निरपराध इत्यत्र विनतस्य वादमपोदितुं नाक्षमिष्टः सत्यरथः ।

पञ्चम्यां सायमेव विष्णुना निर्णयो दत्तः । अस्मिन् विचारणे पृथक् पृथक् अपराधिनो न विचारिताः । यतस्तैस्तत्कालसम्प्रदायमनुसृत्य सर्वैर्निसृष्टार्थः प्रतिनिधिर्वृतो विनतः अधुनातनो न्यायवाद्यन्यादृशः ।

तत्कालनिसृष्टार्थप्रतिनिधिरन्यादृशः ।

"अथ विष्णोर्निर्णयः"

"निशम्भुना परन्तपसङ्घनायकेन सामन्तरुचिराश्वाय लिखितं प्रथमं लेखं यदि परीक्षामहे तेन द्वौ विषयौ स्पष्टौ भवतः । सामन्तः परन्तपसङ्घोपनायकेष्वन्यतमः परन्तपसङ्घस्य लक्ष्यं च मगधसाम्राज्ये समितिञ्जयस्यैकदुहितुः सूर्यप्रभायाः पुनः सिंहासने संस्थापनमिति । निशम्भुनैव सामन्ताय लिखितं द्वितीयं लेखं यदि परीक्षामहे तेन द्वौ स्पष्टौ भवेतां विषयौ परन्तपानां धनं लक्षद्वयसुवर्णमितं सामन्तस्य गृहे न्यासीकृतं तच्च साम्राज्ये नानादिग्भ्यः सम्पादितमिति । तेनैव सामन्ताय लिखितं तृतीयं पत्रं मुख्यमेकं विषयं स्पष्टीकरोति । तेन सामन्त आज्ञाप्यते यावच्छक्यं सम्पन्नगृहविलुण्ठनेन भूरि धनं सम्पादयितव्यमिति । तस्यैव चतुर्थं विप्लवसिद्धेरनन्तरं तुभ्यं काशिदेशो दीयत इति सामन्तं प्रलोभयति । सामन्तस्य गृहे मिलितं पुस्तकमेकं सामन्तस्य हस्ते स्थितानां परन्तपसङ्घसभ्यानां स्वहस्तसनाथां काञ्चित्पट्टिकां बोधयति ।

मिलितानि सर्वाणि पत्राण्यङ्कलिपौ वर्तन्ते । अङ्कलिपिज्ञो राष्ट्रियः सत्यरथस्तानि सम्यक् पठितवानिति वयं तृप्ताः स्मः । अपराधिनां प्रतिनिधिश्च सा नाङ्कलिपिरिति वा राष्ट्रियः सम्यङ न पठितवानिति वा निरूपयितुं नाशकत् ।

इतरैर्लिखितानि पत्राणीतरानपराधित्वेन स्थापयितुं न प्रभवन्तीति श्रीमान्भार्गवः करोति वादम् । तन्न्यायसूत्रं वयमप्यङ्गीकुर्मः तथापि

तत्रास्त्यपवादः। यदि तादृशानि पत्राणि समागतानि श्रद्धया गुप्ते स्थले पत्री रक्षेद्यदि तदनुकूला च चर्या पत्रिणस्तर्हि पत्रीसिद्धापराधेन सम्बद्ध एवेत्यनुमातुं शक्येत । प्रकृतानि पत्राणि सामन्तेन पातालगृहे रत्नाद्यमूल्यधनवद्रक्षितानि । तस्य तदनुकूलां चर्यां च सङ्घपुस्तकं बोधयति । तस्मात्सम्बन्धिन एवैतानि पत्राणि न प्रतारकस्येति निश्चिनुमः ।

"सङ्घपुस्तके परन्तपपरन्तपसङ्घ इत्येवास्ति न तस्य लक्ष्यं किमपि" तस्मात्सङ्घं राजद्रोहित्वेन निरूपयितुं पुस्तकं न प्रभवतीति भार्गवस्य वादः । रमणीय एवायं वादो यदि भार्गवः परन्तपसङ्घस्य लक्ष्यमन्यद्वक्तुं शक्नुयात् । परन्तपसङ्घ इत्यस्य शत्रुनाशकसङ्घ इत्यर्थो भवति । ते शत्रवो भवन्त्विदानींतनप्रभुत्वधारिणः उताहो अन्ये । यान्कांश्चिन्मर्दयितुं स सङ्घ इति नामैव तस्य बोधयति । तावदेवालम् । स्थिते प्रभुत्वे न्यायविरोधिनः । शिक्षितुं प्रजाभिः किमर्थं गुप्तः शत्रुनाशकसङ्घोऽन्यो निर्मातव्यः ।

वस्तुतस्तु परन्तपसङ्घो राजद्रोह्येवेति वक्तुं प्रमाणानीतराणि सन्ति । प्रदर्शितानि च तानि यथावद्राष्ट्रियेण । मगधसाम्राज्ये बालोऽपि वदेत्परन्तपसङ्घो राजद्रोहीति । परन्तपसङ्घनाम तादृशं प्रसिद्धम् । एवं स्थिते सामन्तो निजस्य सङ्घस्यनिरपराधस्य तादृशं शापग्रस्तं नाम कुतो न्यस्तवान् ? तस्मान्न समर्पको भार्गवस्य वादः ।

एवं सामन्तो रुचिराश्वस्तस्य वीरसेनपालितं चतुर्थं पत्तिदलं च समग्रं राजद्रोहिणा परन्तपसङ्घेन सम्बद्धमिति पर्यवस्यति । सद्भिरसद्भि-श्चोपायैर्धनस्य सङ्ग्रहणं सेनानिर्माणं सार्वभौमं प्रद्योतनं सानुगं हत्वा

साम्राज्याक्रमणं चेति परन्तपसङ्घस्य कार्यप्रणालिका । अस्यां प्रणालिकायां सर्वेप्यारोपिणः सम्बन्धिन इति निश्चीयते ।

राष्ट्रियस्त्वारोपमन्यं करोत्यभियुक्तेषु । स कः । नीचमतीव क्रूरं च चौर्यम् । तत्रासौ निशम्भोस्तृतीयं पत्रं प्रमाणत्वेनोदाहरति । तदपर्याप्तमित्यस्माकं दृष्टिः । पत्रं चौर्याय केवलं प्रेरयति । न चौर्यं कृतं बोधयति । तस्मात्स आरोपः परिहृतः ।

सामन्तरुचिराश्वाय सहस्रपतिवीरसेनाय शतपतिभ्यश्च दशभ्यो नायकेभ्यो मुख्यापराधित्वाद्वधदण्ड एव देय इति यद्यपि साधारण-दण्डनीतिसूत्रं तथापि मानवसाधारणधर्मसूत्रमालोच्य यावज्जीवितं कारागृहवासदण्डो दीयते । कारागृहयाप्ये जीवितशेषे भगवन्तं स्मर्तुमेतेभ्योऽवकाशो वितीर्यते ।

तेषु च सामन्तस्यातीवमुख्यत्वात्तस्य गृहोपकरणानि सामन्त्या आमरणानि च हित्वा सर्वं चरस्वं प्रभुत्वेन दण्डो गृह्येत । तथा सङ्घ-धनं च सर्वम् ।

अन्ये सर्वे प्रायः परप्रेरणेनोपहतबुद्धयः सङ्घं प्राविशन् । तस्मात्तेभ्यो लध्वपराधेभ्यस्त्रीणि त्रीणि वर्षाणि कारागृहवासदण्डो दीयते ।

यद्यपि वीरिण्याः सङ्घेन सह सम्बन्धोऽस्तीति शङ्कितुं शक्यम् । तथापि तदपराधनिरूपकं नास्ति प्रमाणम् । तस्मादुत्सृज्यते सा ।

रुचिराश्वपुत्रो जवनाश्वो निरपराधः । तस्मात्पितुः संस्थानं स प्राप्तुमर्हतीति

वयं निर्णयामः । दण्डनायकपदवी तु राजद्रोहिणां वंशाय न देयेत्यस्माकं दृष्टिः । तस्मादाविश्वासं रुचिराश्ववंशादाच्छेत्तुमर्हति तां सम्राट् । तां पदवीं सम्राडेव समर्थाय दद्यादिति न पृथग्वक्तव्यमस्माभिः । कार्षापणानां पादलक्षं दण्डनायकस्य वेतनार्थे यथोक्तसंस्थानादायस्य भोक्ता सम्राजे करं दद्यात् ।"

इति
सार्वभौमेन
दत्तासाधारणाधिकारः
धर्मासनपतिः
भारद्वाजो विष्णुशर्मा ॥

## चतुर्दशं प्रकरणम्

# अल्पश्चरणोपहारः

गिरिव्रजनगरे भवशर्मणो गृहं मध्यमां कक्ष्यां गाहते । तस्मादन्ये च द्वे गृहे तस्य स्वभूते तस्मिन्नगरे स्तः । भवशर्मा सामान्यतो धनवानित्येव प्रवादः । तथापि तस्य धनं कियद्वेति कोऽपि न जानाति ।

भवशर्मा तु परधननिरपेक्षः । स्वधनं तु पणमपि सुवर्णादधिकं मन्यते । द्वेष्टि वृथा व्ययम् । द्वेष्ट्याडम्बरम् । न तस्याण्वपि भोगलम्पटत्वम् । औदार्यमुन्मादपर्यायस्तस्य भाषायाम् । तस्य स्त्रीविद्याप्रियत्वं प्रागेव विदितं पाठकानाम् ।

भवशर्मणो देवशर्मा विष्णुशर्मा च प्रथमद्वितीयौ तनयौ चन्द्रप्रभा विष्णोरवरजेति च पाठकानां ज्ञातो विषयः । चन्द्रप्रभायाः कनीयान्भवशर्मणः पुत्रः केशवशर्मा । स पञ्चदशवर्षवयस्कः । बुद्धिमान् अध्येता । पितुरतीव प्रियः ।

पञ्चम्यां रात्रौ भुक्त्वा भवशर्मा शय्यागारं गतः । स यद्यपि शयने सुप्तस्तथापि तस्य नयने न निद्रालीढे । रात्रेः पूर्वः प्रहारोऽतिक्रान्तः । ज्वलति दीपः। सम्प्रति विष्णुशर्मा तां शालां प्रविष्टः । तमनुसुवर्णसञ्चिकापाणयो राजपुरुषाः प्रविष्टाः। विष्णुशर्मण आज्ञया ते सुवर्णसञ्चिकास्तत्र शालायां कटे निक्षिप्य गताः ।

भवशर्मा – "वत्स ! विष्णो ! किमद्यैव दत्ताः सम्राजा यथा प्रतिश्रुतं सुवर्णाः ?"

विष्णुशर्मा – "अथकिम् ?"

भवशर्मा – किं विचारणं समाप्तम् ?"

विष्णुशर्मा – """सायमेव समाप्तम् ?"

भवशर्मा – "किं त्वया निर्णयोऽपि दत्तः ?"

विष्णुशर्मा – "अथकिम् ।"

भवशर्मा – "कीदृशः स निर्णयः ?"

विष्णुशर्मा सर्वमचकथत् ।

भवशर्मा – "वत्स ! सर्वानपि मृत्युमुखान्मोचयितुमेव किं त्वं हस्तप्राप्तं संस्थानमत्याक्षीः ?" यदि सत्यव्रत न्यायनिर्णयकोऽभविष्यत् सर्वेऽपि ते राजद्रोहिणश्चोराः कृतान्तसदनं प्रावेक्ष्यन् ।"

विष्णुशर्मा – "सत्यमुक्तं तातेन । नाहं कीर्तिकामनया तमुन्नतं न्यायनिर्णयाधिकारमववरम् । मया गृहीतास्ते दुरदृष्टशालिनः सर्वे निकृष्टं मरणं गच्छेयुरिति पापभयं मामाविक्षत् । तयोर्भयशोकयोरेतद्विलसितम् । यदहं हस्तप्राप्तं संस्थानं नास्मि लक्षीकृतवान् । तातस्य सत्येन मातुर्दैवा-

राधनबलेन च सर्पशापग्रस्ते कुलेऽपि वयं निर्भयं जीवामः । अस्मिन्नेतावता कालेन स्वस्थे कुले पुनर्मा निपातिषुर्बह्वीनां विधवानां बाष्पोदक-परिकल्पिताः शापाः । अपि च यत्संस्थानं मह्यं दित्सितं सम्राजा तद्रुचिराश्वस्यैवेति मया राष्ट्रियमुखात्प्रागेव स्पष्टं ज्ञातम् । निरप-राधाज्जवनाश्वात्तदपहर्तुमनुचितम् । समृद्धमपि तत्परस्वं तातस्य परस्वापहरणनिन्दा असकृत्क्रियमाणाः स्मृत्वैव निराकार्षम् ।''

भवशर्मा - (स्वगतम्) ''सर्वमनेनोक्तं सत्यम् । मया तु लोभिना महा-पुरुषप्रकृतेरस्य कर्म निन्दितं मनसा ।'' (प्रकाशम्) ''सत्यं त्वयोक्तम् ।''

विष्णुशर्मा - ''इदं धनं तातेन पेटिकायां निक्षिप्तव्यम् ।''

भवशर्मा -''वत्स ! किं मे दत्तवानसीदं मेलयितुमस्माकं कुटुम्ब-धनेन ? उताहो पृथग्रक्षामि त्वदर्थे ?''

विष्णुशर्मा - ''तातस्येदं पादोपहरणम् । तद्यथेष्टं विनियोक्तुं प्रभवति स्वयं तातः ।''

भवशर्मा - (ससन्तोषम्) ''अनृणोऽसि पितुः । वर्धस्व भूयस्या श्रिया।''

विष्णुशर्मा - ''अयमल्पश्चरणोपहारः । तातस्याशीस्त्वमूल्या ।''

अथ भवशर्मोत्थाय ताः सञ्चिकाः पेटिकायां बृहत्यां न्यधात् । ततः पुनः पुनः शयनमुपगतः । दीपप्रकाशे ससन्तोषविकसितं तस्याशोभिष्ट मुखम् । अथैवमवादीत् - ''मन्ये तव भोजनं नाभूत् । गच्छ भोक्तुम् ।''

विष्णुशर्मा – “तातस्य भोजनं किमभूत् ?”

भवशर्मा – “अभूत् ।”

गतो विष्णुर्भोजनाय। भवशर्मा सन्तुष्टो मनस्येवमकार्षीत् – “एतावता कालेनाहं यावत्सम्पादितवानस्मि तावदेकस्यां रात्रौ दत्तं पुत्रेण । अस्य सर्वे गुणाः शुभाः । एक एव दुर्गुणोऽस्त्यस्य । अयं धनं तृणवद्गणयति ।”

पञ्चदशं प्रकरणम्

## दायविभागः

शय्यायां विश्रान्तो भवशर्मा चन्द्रप्रभाविवाहमधिकृत्यैव विचारयति । यदि सिंहवाहनो मिलेद्विश्वसाराद्वीरमित्राच्च स एवाधिक इति भवशर्मणः स्फुरति । स यद्यपि विष्णोः सखा तथापि पित्रा परवान् । स च पिता सुतरां दृप्तः सामन्तः । असामन्तकुलात्सकन्यामङ्गीकरोतीति भवशर्मणो नास्ति विश्वासः । तदा सत्यरथरणन्धरौ गच्छति भवशर्मणो मनः । न तयोस्तिष्ठति दीर्घं कालम् । पुनः स्पृशति सिंहवाहनम् ।

गताः कतिपये क्षणाः। अनन्तरं धूमितमुखानुमेयचित्तविकारो देवशर्माऽन्तः प्रविष्टः ।

देवशर्मा पितेव लोभी । पितुः सद्गुणाः एव तस्मिन्मृग्याः । अयं वीरसिंहस्य पदातिसैन्ये कश्चिच्छतपतिः ।

भवशर्मा तमालोक्य – "को विशेषः" इत्यप्राक्षीत् ।

देवशर्मा – "तात ! बह्वस्ति कथयितव्यम् । कथयामि भ्रात्रोर्मातुर्भगिन्याश्च समक्षम् ।"

भवशर्मा – "किमस्ति तादृशमत्याहितम् ?"

देवशर्मा – "न किमप्यत्याहितम् । अस्माकं कुटुम्बव्यवहारानधिकृत्य बह्वस्ति सम्भाषितव्यम् ।"

भवशर्मा – "मयि जीवति न कस्याप्यस्माकं कुटुम्बव्यवहारानधिकृत्य नास्ति सम्भाषितुमधिकारः ।"

देवशर्मा – "तात ! प्रमाद्यति भवानस्मिन्विषये । कियन्त कालं वयं शिशव इवचरेम ।"

भवशर्मा – "को निवारयति युष्मान् । चरत प्रौढा इव । कुटुम्बव्यवहाराणां युष्माकं प्रौढत्वस्य च कः सम्बन्धः ?"

देवशर्मा – "कथयेयं यदि मिलन्ति सर्वे ।"

अथ देवशर्मणा समाहूताः सर्वे समागतास्तां भवशर्मणः शयनशालाम् । भवशर्मोत्थाय शय्यायामेवोपविष्टः । तस्य पुत्रीपुत्राश्च कटे समुपविष्टाः । वैजयन्ती तु भवशर्मणो भार्या शय्यान्तिके स्थिता ।

अथ भवशर्मा देवशर्माणमालोक्याब्रवीत् – "आयताः सर्वे । उपक्रमस्व वक्तव्यम् ।"

देवशर्मा – "अस्माकं कुटुम्बस्य स्वं कियत् ? तस्य संविभागः कथं कर्तुमिष्यते तातेन ?"

वैजयन्ती – "सम्प्रत्येष प्रश्नः किमर्थः ?"

देवशर्मा - "अत्यन्तमावश्यकः प्रतिभाति मे । तात एव जानाति सर्वं कर्तव्यम् । संविभागे वा किं प्रमाद्यति तातस्य धीः ?"
भवशर्मा - "अयि कस्तवोद्देशः ?" इति कठिनस्वरेण पृच्छति ।

देवशर्मा - "मम यावान्भागः स्यात् - धर्मतो यावान्मह्यं देयो भागः स्यात् । तावताऽहं स्वातन्त्र्येण जीवितुमिच्छामि ।"

भवशर्मा - (सातङ्कम्) "अरे ! किं पृथग्भवितुमिच्छासि ?"

देवशर्मा - "यावत्सर्वेषामकलुषं मनः तावत् पृथग्भवितुमिच्छामि । एकत्रस्थितानामेव मनसा पृथग्भावो मा भूत् । अस्मिन्गृहे न काचिदाढ्यकुलजा स्नुषा भूत्वा जीवितुं प्रभवति । यद्यप्यहमपि लोभी तथापि तातस्य लोभो ममाश्चर्यं जनयति । गृहे न काचिदस्ति परिचारिका । माता त्वशक्ता । चन्द्रप्रभा च विद्याव्यासङ्गमग्ना । दुरदृष्टवशेन केनापि दण्डनायकजयकेतोर्दुहिताऽस्माकं गृहदासी संवृत्ता ।"

भवशर्मा - (सक्रोधम्) "अयि ! मा भूत्तव भार्याया अत्रगृहे किमपि कष्टम् । त्वं तु गृहमेधिनीनां कर्तव्यकर्माचरणं दास्यं मन्यसे मोहात् । पृथग्भूत्वा राजपुत्रीमिव लालय भार्याम् ।"

देवशर्मा - "तात ! भवत आशिषा यद्यहं श्रीमान्भवेयं तथैव लालयेयम् । अत्र कस्मादहमधिको मानवप्रकृतिमतिक्रान्तुम् ?"

भवशर्मा - "शृणुत सर्वे मम निश्चयम् । येषामर्थे मया कठिनेन पणोऽपि न कस्मैचिदुसृष्टः । अवजानन्ति तव एव मां पुत्राः । अद्या-

वज्ञातवान् देवशर्मा । श्वोऽवज्ञाता विष्णुः । इतः प्रागेवावज्ञातोऽहं चन्द्रप्रभया । यद्यपि विष्णुर्मयि सुतरां भक्तः । तथापि मत्तो विलक्षणाशयः । नाहमुत्सहे पणस्यापि व्ययं कर्तुम् । अयं तु तृणवन्मन्यते सहस्रं च सुवर्णानाम् । एवं विरुद्धाशययोरावयोः कदाचिद्यदि कलहः सम्भवेत् । तदा मम मनो इतोऽपि शोचनीयावस्थं स्यात् । अस्मिन्गौरवे जीवत्येव पृथक्करोमि देवशर्मणा सहेममपि । बालः केशवो मम तिष्ठति सविधे ।''

विष्णुशर्मा - ''दारुणस्तातस्य वचनोपन्यासः । किं विष्णोः शक्यं कस्मिंश्चिदपि समये तातावज्ञाकरणम् ?''

भवशर्मा - ''वत्स ! जानामि त्वाम् । केवलमुक्तवानस्मि क्रोध-पारवश्येनान्यथा । निश्चयो यस्तवापि पृथक्करणे मे तत्र मा किमपि प्रतिवादीः । त्वयि योग्येप्यागामिनी ते भार्या यदि मम चर्यामधिकृत्य मंनस्यपि कलुषा भवेत्तव तदा कष्टं स्यात् ।''

चन्द्रप्रभा - ''तात ! कुतो न शङ्क्यते केशवस्यागामिनी भार्या ?''

भवशर्मा - ''वत्से ! अकिञ्चित्करो मे केशवेन सह कलहः ।''

विष्णुशर्मा - ''किं विभाग एव निश्चितस्तातेन ?''

भवशर्मा - ''किं शृणोष्यधुना विभाग एव निश्चितो मया श्वो मध्याह्नभोजनं पृथक्पृथगेवास्माकमिति निश्चितम् ।''

देवशर्मा – "अनुगृहीताः स्मः ।"

भवशर्मा – "भवतु यथा ते रोचते । अधुना सिद्धमस्ति यन्मे धनं तदर्धलक्षं सुवर्णानाम् ।"

सर्वे साश्चर्यं शृण्वन्ति ।

भवशर्मा – अत्र मे पित्र्यं मूलधनं विंशतिः कार्षापणसहस्राणि । तद्द्वारैव मया समार्जितं धनं प्रायस्ततो द्वादशगुणम् । सर्वं मिलित्वा पादलक्षं सुवर्णानां सम्पन्नम् । अस्यां रात्रावेव मह्यमुपहृतं विष्णुना पादलक्षं सुवर्णानाम् ।" –

विष्णुं विनान्ये साश्चर्यं शृण्वन्ति ।

भवशर्मा – "उभयं मिलित्वाऽभूदर्धलक्षम् । अत्र दविणेऽर्धलक्षं कार्षापणानां धर्मार्थं पृथक्क्रियते । तेनागन्तुकानां साधूनां निवासाय काचन धर्मशाला निर्मीयेत। शेषं धनं करोमि षड्भागान्। एको मे यावज्जीवितं भोक्तुम्। एको युष्माकं मातुः सर्वैः सहाधिकारैः। अन्ये चत्वारश्चतुर्णामपत्यानाम् । विहारिश्रेण्यां वर्तमानं गृहं भवतु देवशर्मणः। भैरवालयसविधे वर्तमानं विष्णोः। इदं तु गृहं केशवस्य । अत्रैव वसतिरावयोर्दम्पत्योराजीवितकालं केशवेनाङ्गीकार्या । मम भागो ममानन्तरं चतुर्भिरपत्यैस्तुल्यं विभज्यभुज्येत ।"

देवशर्मा – "अहमङ्गीकरोमि विभागक्रममेतम् । किंत्वाशिषा मामभिनन्द्य प्रेषयतु तातः ।"

भवशर्मा – "किं महालुब्धादप्याशीः प्रार्थ्यते ? शापार्ह एवासि त्वम् । तव पुत्राः पौत्राश्चावजानन्तु परितस्त्वाम् ।"

चन्द्रप्रभा – "अयं शापोऽप्यधिकं आशिषः ।"

विष्णुशर्मा – "अहं त्वस्मिन्नेव वासगृहे तातेन सह वसेयम् । न मां पृथक्करोतु तातः ।"

भवशर्मा – "वत्स ! केवलं त्वा गृहात्पृथक्करोमि। न मनसा । आज्ञेयं मे । अन्यदस्ति ते वक्तव्यम् । त्वं सर्वेष्वप्येषु विशिष्टः । तस्माद्भगिन्याः परिणयव्ययस्त्वया भ्रियताम् ।"

विष्णुशर्मा – "अनुगृहीतोऽस्मि । निर्वर्तयिष्यामि यथादेशम् । एकमहं याचे । मम साहाय्यकाय मया सह वसतु भगिनी ।"

भवशर्मा – "भवतु तथा । तस्याः परिणयं तु मया सहालोच्यैव कर्तुमर्हसि त्वम् । साधारणेभ्यो नेयं देया ।"

विष्णुशर्मा – "यथाऽऽज्ञपयति तातः ।"

देवशर्मा सन्तोषेण विष्णुशर्मा कृच्छ्रेण चाङ्गीकृतवन्तौ तं विभागम् । चन्द्रप्रभा यद्यपि विभागेन दूना तथापि भ्रात्रा विष्णुशर्मणा सह वासाय स्वागतमदात् । द्वारसविधे स्थिता सर्वं शृण्वन्ती देवशर्मणः पत्नी सिंहोदरी तु पर्यवसन्नो विभाग इति सन्तोषमपारमगात् । गरुडाक्ष्या अपि तस्याः सन्तोषविकसितयोरक्ष्णोः किमप्यदर्शि सौन्दर्यम् ।"

## षोडशं प्रकरणम्

# गणिकाप्रेमपरिणामः

गुरुजयन्त्यां रात्रावेव सुनन्दिनी दिष्टान्तं गता । मरणसमये तु तस्याः सुकर्मा यत्सन्निहितः सैव तेन जन्मनि कृता मातुःसेवा । गिरिव्रजात् प्रतिनिवृत्ता भ्रामरी च तदा सन्निहिता ।

पुत्रो मातुर्यथाकथञ्चिदौर्ध्वहिकक्रियाकलापं द्वादशभिरहोभि-र्निर्वर्तितवान् । त्रयोदश एव दिने भगिन्या भ्रामर्या सह गिरिव्रजमायातः ।

स तस्यामेव रात्रौ द्वितीये यामे कृताहारः समुज्ज्वलवेषधारी लीलादण्डपाणिर्गृहात्प्रस्थितः । यद्यपि नैशेन तमसा तस्य मुखे स्थितो विकारो नाभिलक्ष्यते । तथापि तस्य विलक्षणा गमनवैखरी तदन्तरस्थं द्योतयति विषादम् । किं स मातृनिर्याणजः। न । स हि मन्यते मातुर्निर्याणं तदा सव्यमशोचनीयम् । किं स एकाकिभगिनी विसर्जनजः । न एतावति काले तस्य न परिचितः । सकृदपि भगिनीप्रेमा । रिक्तेन पाणिना प्रियामुपगच्छतः स भवेत् । तत्पूर्वा हि तस्य सा दशा ।

गच्छतस्तस्य प्राप्तव्यः प्रदेशो गोचरोऽभूत् । स एकः प्रकृष्ट कक्ष्यागाही गणिकालयः । सुकर्मा त्वरितपदस्तमनावृतद्वारं प्राविक्षत् । प्रविश्य च परिचितां पार्श्वशालामगात् । तत्र प्रियां द्रष्टुं पारयेयमिति । यद्गृहं प्रविष्टमात्मानं पश्यन्त्येव परिचारिका यथा पूर्वं स्वागतवचनेन नापूपुजत् ।

तन्नवमवमाननं प्रियादर्शनोत्सुकेन तेन नाभ्यलक्षि ।

स तस्यां पार्श्वशालायां महार्घवस्त्राभरणैर्द्विगुणां शोभां दधानामात्मनो मनःप्रियामदर्शत् । तस्य नेत्रयोः पारणमिवाभूदेकं क्षणम् ।

सुकर्माणं पश्यन्त्या एव अतिमात्रशोभी प्राक्तनो मुखविकासोऽस्तम् अगात् । जुगुप्सितमिव वस्तु विलोक्य दृष्टिश्च सङ्कुचिताऽभूत् । यद्यपि सुकर्मा तदुभयं नाभिलक्षितवान् तथापि मौनम प्रत्युत्थानं च तस्या अभिलक्ष्य सुतरां दूनः ।

अथानुपविष्टस्यैव तस्योपविष्टया तया सहैवं तत्पूर्वं सम्भाषणमभूत् -

“प्रिये कामसेने ! मामन्यथा शङ्किष्ठाः । द्वादशभ्यो दिनेभ्यः प्राङ् मम माता दिष्टान्तं गता । एषु दिवसेषु तस्या और्ध्वदेहिकक्रियाकलापमग्नो ब्रह्ममठे वर्तमानो न त्वां विलोकितुमपारयम् ।” इति सुकर्मा दीनस्वरेणोक्तवान् ।

अन्यथाभूतहृदया गणिका कामसेना तु चिरपरिचितस्य बहुदस्य मातुर्मरणमधिकृत्योपचारवार्तामपि विस्मृत्य निसर्गतः कारणतो वा बहुकालाभ्यस्तं प्रेमाणमप्यपधूय मानवजनसाधारणं कृतज्ञताधर्ममपि पृष्ठतः कृत्वा सावज्ञस्वरमेवमवादीत् ।

“ईदृशैर्मुखप्रदर्शनैरलम् । यदि मां शाश्वतं न विलोकेत भवान् । अहमुपकृता स्याम् ।”

कामसेनाया अकालोचितेन पारुष्येणाकम्पिष्ट सुकर्मा । तथाप्याशामविहायैवमब्रवीत् - "अयमेकोऽपराधः क्षम्यतां गृहकष्टव्याकुलस्य प्रियस्य ।"

कामसेना - "काहं क्षन्तुम्? एतावद्भवन्तं याचे । अवसितोऽस्त्वावयोः सहवासः ।"

सुकर्मा - "प्रिये ! मन्ये केऽपि मम शत्रवस्तवाग्रतो मामवर्णयन्नन्यथा । सत्यं ब्रवीमि तव हस्ते हस्तं कृत्वा । मनसापि नापचरितम् मया ।"

कामसेना - (अवकाशं लब्ध्वा) "नाहं दूषयामि भवन्तम् । स्वतन्त्राः खलु पुरुषाः । चरतु यथारुचि भवान् । इतःपरं मा प्राविक्षत्कामसेनागृहम् ।"

इत्युत्थाय तंपरिहरन्ती तस्याः शालातोपऽक्रान्ता । सुकर्मा सुतरां व्यथितमनस्कः पञ्चषाणि पदानि तामन्वयासीत् । तदापि शाचिकयेव सह सोपसृतया तन्मात्रा - "नास्ति किं भवतो मर्यादा । अपसरतु भवानितः ।" इति भर्त्सितः।

अथ किं कर्तव्यतामूढः कथमपि परावृत्तः शरीरं तस्माद्गृहाद्बाह्यदेशं प्रापितवान् । ईदृशावस्थस्य तस्यान्य आलोकविषयोऽभूत् । स कः ? तद्भवनं प्रविशन् परिचितः समुज्ज्वलवेषः सुन्दरःकश्चिद्युवा । तदा तस्य सर्वं स्पष्टमभूत् । तदैव स० यज्ञासीदात्मानमधिकधनलुब्धया वेश्यया प्रतारितम् । अस्मार्षीद्वचनानि मातुर्मरणशय्याजुषः ।

स शून्येन हृदयेन गृहान् प्रतिनिवर्तमानो मार्गमध्ये निजगृहवीथि-

वेदिकस्थां फलिनीमद्राक्षीत् । सुकर्मा फलिन्याः सङ्गीताकर्णकानाम् अन्यतमः । फलिनीं शापवशाद्गन्धर्वलोकाद्भुवि पतितां मन्यमानानामन्यतमः । तन्मुखावलोकनमपि भाग्यमध्ये गणयताम् अन्यतमः । तामकस्मादालोकितवतस्तस्य रुद्धेवाभूद्गतिः । फलिनी तं सुलभमनुमितवती कामसेनागृहात्प्रतिनिवर्तमानम् । अथ तस्य प्रबोधानायेदमात्मरचितं पद्यमपाठीत् । -

२२. अधुना विदधाति मूर्ध्नि वेश्या
चरणेन प्रतिहन्ति नायकं श्वः ।
अधमद्रविणैकतत्परायाः
क्वनु रागो गणिकापिशाचिकायाः ॥

रथ्यात एव सुकर्मा - "भगिनि ! नागधरि ! यथार्थोऽयं श्लोकः ।" इत्यवादीत् ।

फलिनी - "भ्रातः ! एतावता कालेन भवता प्रतिबुद्धम् । अवसितं ते दुरदृष्टम् । पुनस्तस्मिन्कर्दमे मा निपातीः ।"

"शिरसा स्वीक्रियते भगिन्या उपदेशः" इत्यभिधायैकाकिनीं गृहे स्थितां भगिनीं स्मृत्वा सुकर्मा त्वरितपदं चलितः ज्वरविमुक्तस्यान्नप्रीतिरिव गणिकाप्रेमविमुक्तस्य सुकर्मणो भगिनीप्रीतिरुदगात् ।

अवसितः प्रकरणांशः। अस्ति स्वल्पोऽस्यानुबद्धः कथांशः । सोऽप्यत्रैव प्रकरणे कथ्यते । गणिकागृहं प्रविशन्यः सुकर्मणा दृष्टः स सेनापते भ्रातृपुत्रो रुद्रसेनः। ज्येष्ठपितृव्यस्यानपत्यत्वात्तस्यानन्तरं भावी सामन्तः

भावी दण्डनायकश्च । राजपुत्रस्य विश्वसारस्य प्रियः सुहृत्। बन्धुश्च सन्निकृष्टः । लक्षसुवर्णाधिकपित्र्यद्रव्यः । स्वतन्त्रश्च प्रागेव भ्रात्रा सह विभक्तस्य पितुरुपरमात् । सुन्दरी जनाकर्षकरूपः। कामुकश्च। ब्रह्मचर्यात्पतितोऽपि गृहस्थाश्रममप्राप्तस्त्रिशङ्कुरिवान्तरालस्थः । सुलभप्रचण्डक्रोधः। बलदृप्तश्च ।

स स्वनूतनप्रियागृहात्परावर्तमानं सुकर्माणं दृष्टवान् । तदा तस्य मनसि लीलाभिर्विलसन्तं कामं चरणेन विधूय विकारैः प्रज्वलवान् क्रोधस्तदक्रामीत् । स तेनैव क्रोधवेगेन गत्वा स्वागमनं प्रतीक्षमाणां रूपमदकाणां पाकप्रवणदुर्दैवां रूपाजीवां प्रापत् । सा यावत् सम्भ्रमेण प्रत्युत्थातुं प्रयतते तावदेव स तामभिद्रवंत्सपादरक्षेण वामपादेन निपात्य तस्याः संवाहनादिभिरूपचारैराराधनीयेष्वङ्गेषु यथाक्रोधवेगं प्रहर्तुम् आरब्धवान् । क्षणैः कतिपयैः प्रहरणकाण्डं समाप्य "दुष्टे, बन्धकि ! एकस्य हस्ते स्थिता तं प्रतार्य किमन्यं चाश्रयसे ? एतैः प्रहारैस्तवायातु बुद्धिः । तमेवाश्रयस्व स्वानुरूपं क्षुद्रं नामत एव सुकर्माणम् ।" इत्यभिहितवान् ।

तस्मिन्भयङ्करे रङ्गस्थले रोदितुमपि भीताऽभूत् कामसेना । आस्तामुत्तरं वक्तुं शक्तिदूरे । तस्याः सहायभूतो मन्मथः प्रागेव धनुर्विसृज्य पलायितः ।

अथेदं कर्म कृत्वा विजयशाली वीर इव रुद्रसेनः सावष्टम्भं सावेशं चाविनतकायः परिक्रामन्निष्क्रान्तः । यद्यपीदं रुद्रसेनस्य कर्मातीवासभ्यं तथापि कामसेना तदर्हेत्यत्रास्माभिः सह पाठका एकीभवेयुरिति मन्ये ।

सप्तदशं प्रकरणम्

## सुकर्मणः प्रतिज्ञाक्षराणि

गता चैत्रकृष्णनवमीरात्रिः । तस्यां रात्रौ सुकर्मा नालभत निद्राम् । कामसेना च गतामात्मनश्चर्यां वेश्यायाश्च कृतघ्नतातिशयं स्मारं स्मारं सुकर्मा । स्वस्या अपूर्वमतिकठोरमवमाननं स्मारं स्मारं कामसेना अन्ततः पूर्वः प्रक्षालितरागः शान्तचित्तोऽभूत् । अपरा नूतनक्रोधाविष्टा ज्वरितेव नालभत शान्तिलेशमपि । रुद्रसेनकृतोऽवमान एवाबाधिष्ट ताम् । न सुकर्मप्रत्याख्यानानुताप इति ज्ञातुमर्हन्ति पाठकाः ।

चैत्रकृष्णदशम्याः प्रातः सुकर्मा दन्तधावनं कृत्वा यावन्मुखमचिक्षलत् तावद्राजपुरुषः कश्चिदागत्य सुकर्मणे राजपुत्रस्याज्ञापत्रं किमप्यदात् । सुकर्मा त्वरमाणस्तदुद्घाट्य पठितवान् । तत्रास्त्येष समचारः -

“अयि सुकर्मन् ! महत्यधिकारेऽधिकृतस्यापि स्वं कार्यभारमजानतस्ते चर्या नितान्तं कलुषा भवति । क्व वीर्यवद्भिर्धार्यं सहस्रपतित्वम् ? क्व विटजनोचितं वेश्यालम्पटत्वम् ? तस्मात्त्वमसि च्यावितः सहस्रपतित्वात् । अद्यैव त्वं गत्वा निजामधिकारिमुद्रां प्रत्यर्पय दण्डनायकजयकेतवे । मासेऽस्मिन्नेतद्दिनपर्यन्तं यद्देयं वेतनं तत्ते दास्यति सः ।”

अत्र पाठकानां संशयः स्यात् । जयन्त्युत्सवसन्दर्भे भ्रामर्यां भूयो जातादरो राजपुत्रः कुतो हेतोः सुकर्मणीदृशं पारुष्यं दर्शितवानिति । न

तत्रास्ति न कारणम् । रुद्रसेनो वेश्याप्रहरणमात्रेण न सन्तृप्तः । सुकर्मणि चावहद्वैरं घोरम् । भ्रामरी लोभादेव विश्वसारः सुकर्मणे सहस्रपतिपदवीं प्रायच्छदिति जानाति रुद्रसेनः वेश्यागृहात्परावृत्ताय तस्मै समाचारमन्यं कथितवांस्तस्य सखा कामसेनः । सुकर्मा भ्रामरीं वीरमित्राय दातुं प्रयतत इति । तत्रास्त्यल्पं सत्यम् । तस्मिन्दिने गौतमः सुमित्रस्तं विषयमधिकृत्य सुकर्मणा सह संभाषितवान्। सप्ताहमध्ये प्रत्युत्तरं दास्यामीति स सुमित्रं प्रेषितवान् रुद्रसेनस्तमेतं कामसेनोक्तं समाचारं सुकर्मणो दुश्चर्यावर्णनैः संयोज्य तस्यामेव रात्रौ राजपुत्रस्य सन्निधौ न्यवीविदत् । तस्येदं फलितम् । अन्यत्कारणं वस्तुतः । अन्यत्प्रदर्शितमाज्ञापत्रे ।

अन्यो ह्यः सुकर्मा । अद्यान्यः । पूर्वो भोगाय द्रविणापेक्षी । उत्तरो धूतभोगसङ्गो विरक्तः। तस्मात्तदाज्ञापत्रं सुकर्मणः क्रोधमेवाजीजनत् । न दुःखं स तस्मिन्नेव क्षणे गत्वा जयकेतवे निजामधिकारिमुद्रां प्रत्यर्प्य तस्माद्वेतनं च गृहीत्वा गृहानागतः। अचकथत्सर्वं वृत्तान्तं भ्रामर्यै । अददर्शच्च राजपुत्रस्याज्ञापत्रम् । विषण्णाऽभूद् भ्रामरी । सर्वं कुटुम्बवृत्तं स्मरन्त्यास्तस्या अक्षिणी बाष्पाकुले अभूताम् । क्वापि कोणे स्थितायास्तस्याः कः पृच्छेद्विषादम् ? करुणया को मार्जयेत्तस्या अश्रूणि । अयमहं गच्छामि तपसे हिमाचलम् । "इत्येतावदभिधाय स वेतनधनं वस्त्रग्रन्थिं विधूय तस्मिन्नेव पूर्वाह्णे सुकर्मा सावेगं प्रस्थितः । गच्छतस्तस्य मानसे तु प्रतिज्ञाक्षराण्येतानि पुनः पुनरभासिषत । "अरे दुष्टविश्वसार ! कुमारविशाखमानीय त्वां पदाद्भ्रंशयेयम् । " इति ।

विद्धा कदलीव मूर्छिता भ्रामर्यपातीद् भूमौ । एतस्मिन्नन्तरे समागता गृहदासी तस्यै प्राप्तकालं शीतलोपचारं नाकार्षीत् प्रत्युत धनग्रन्थिम् अपहृत्य गता ।

अष्टादशं प्रकरणम्

## वीरसिंहस्योच्छ्रयः

वीरसिंहः कर्मक्षमः संवृत्तः । चैत्रकृष्णैकादश्यां पुनः स राजकीयरङ्गे प्रविष्टवान् । तस्याभूत्सम्प्रति राजकीयरङ्गे नटिष्यतो विश्वसारदर्शनं नान्दी ।

विश्वसारस्य त्रीणि मुख्यानि मित्राणि । शस्त्रविद्यापरिश्रममित्रं रुद्रसेनः । विलासगोष्ठीमित्रं कामसेनः । रहस्यालोचनमित्रं वीरसिंहः । यदा स्वस्य शीर्षमभिषेकजलेनार्द्रं भवेत्तदा तेभ्यस्त्रिभ्यः सेनापत्यन्तरङ्गसचिव-महामन्त्रिपदव्यो दीयेरन्निति तस्य प्रतिश्रुतिः ।

हिमवति विशाखमन्विष्यानेतुं यत्सम्राजा चत्वारो ब्राह्मणाः प्रेषितास्तमेव समाचारमादौ विश्वसारो वीरसिंहाय कथितवान् । अनन्तरं सुकर्मा भ्रामरीं वीरमित्राय दातुं प्रयतत इति ।

वीरमत्रः – "पूर्वमप्रयोजनम् । उत्तरमसत्यम् ।"

विश्वसारः – (ससम्भ्रमम्) "किमुत्तरमसत्यम् ?"

वीरमित्रः – "वीरमित्रार्थं सुमित्रः सुकर्माणं पृष्टवानिति सत्यम् । तथापि सुकर्मा नाङ्गीकृतवान् ।"

विश्वसारः – "रुद्रसेनः कथितवान्प्रयतत इति ।"

वीरमित्रः – "तस्मै तथा कामसेनः कथितवान् । तस्यान्धवीरस्य स्वयं ज्ञातुं कुतः शक्तिः । स एव कामसेनो मह्यं कथितवान् । आत्मना पूर्वमनुमितं मृषेति । यद् भर्तृदारकेण सुकर्मा पदाच्च्यावितः । तस्य फलं तु दारुणं संवृत्तम् । स दुःखविवशो हिमाचलं जगाम किल तपसे । मात्रा भ्रात्रा च वियुक्ताभ्रामर्येकाकिनी गृहे रुदन्ती तिष्ठति । न परेषां गृहान्गाच्छत्याहूयमानापि । नास्ति स्वगृहे काकिण्यपि । न जाने सा कथं वा जीवेत् ?"

वीरसिंहस्य नायं वचनोपन्यासः करुणाप्रयुक्तः । समये प्राप्ते राजपुत्रस्य रुद्रसेने वैरस्यमुत्पादयितुमेष यत्नः । तेन राजपुत्रसदसि स्वस्याधिक्यं स्थापितं स्यादिति तस्य दृष्टिः । यथा कथं वास्तु तस्योद्देशः । राजपुत्रस्य पुनर्भ्रामर्यां करुणोत्पन्ना । रुद्रसेने तु वैरस्यं नोत्पन्नम् । तस्या स्थाने कामसेनः पतितः । तस्य मृषावादादेवेदृशोऽनर्थः संवृत्त इति ।

आत्मनो भ्रामरीसम्बन्धं वीरसिंहो यज्जानाति तत एवमुपालभत इति वीरसिंहेऽपि किञ्चिद्वैरस्यं अङ्कुरितं राजपुत्रस्य । स्वप्रभोर्मुखमुद्रया तद्विज्ञातवान्वीरसिंहः । अथैवं कालोचितमुक्तवान् । "पुत्रे दुश्चर्यावत्यपि न सहेरन् राजानः । अन्येषां सम्बन्धानां का कथा ? भर्तृदारक ! भ्रामर्याः कष्टस्यात्मनः पतनस्य च सुकर्मणो दुर्वृत्तमेव कारणम् । भर्तृदारकेण कृतं यत्सुकर्मणश्च्यावनं सुगुणपाठः सैनिकाधिकारिणाम् ।"

अयमनन्तरो वीरसिंहस्योपन्यासो विश्वसारमवीवृधत् । अथ सदम्भेनैवम् आह – "अस्माकं पदवी दारुणा । यदि वयं करुणां प्रदर्शयेम तर्हि न

चलेत्सम्यक्छासनयन्त्रम् ।''

भ्रामरीं समाश्वासयितुमालोचनं वीरसिंहेन सह कर्तुं नास्ति विश्वसारस्योद्देशः । सम्प्रति स कदाचिदात्मभगिनीहिताय भ्रामरी-सम्बन्धं दूरीकर्तुं यदि प्रयतेत तर्हि कष्टं स्यादिति राजपुत्रस्य तात्कालिकी दृष्टिः ''प्रथमं तस्मै भ्रामरी सम्बन्धकथाकथनमेव स्वस्यापराधः । राज्ञां बहुपत्नीकत्वं भूषणमिति तस्योपन्यासान्विश्वस्य स्वयं कथितवान् । इतः परं भ्रामरी सम्बद्धं यत्किञ्चिदपि वीरसिंहाय न कथयितव्यम् ।'' इति तस्यास्तात्कालिकदृष्टेरनुबन्धो निश्चयः । तस्मात्प्रसङ्गान्तराय गच्छन्पुनराह - ''सखे मौद्गल्य ! अस्त्वेषा कथा । प्रथमं विचारयितव्यो विशाखस्य विषयः । कथमप्रयोजनं तदन्वेषणम् ।''

वीरसिंहः - ''मम पित्रा कथितम् । स मृत इति सम्यगपरिशोध्य मम पिता न किञ्चित्कथयेत् ।''

विश्वसारः - ''कदा कथितवांस्ते पिता ?''

वीरसिंहः - ''यदा धनञ्जयस्य विवाहे वधूवरावाशिषाऽभिनन्दितुमागतः तदा मह्यमकथयत् ।''

विश्वसारः - ''कथं ज्ञातमिदं तव पिता ?''

वीरसिंहः - ''सम्प्रति मम पिता हिमाचलं गत्वैव प्रत्यागतः ।''

विश्वसारः - ''तस्य हिमाचलगमने को हेतुः ?''

वीरसिंहः - "पलायितं सत्यसेनमन्वेष्टुं गतः । तस्मिन्समये विशाखस्यान्वेषणं च कृतवान् । विशाखेन सह वसन्कश्चन परिव्राजक एव कथयामास किल मम पित्रे ।"

विश्वसारः - "कथं मृतः ?"

वीरसिंहः - "विशाखः सह तेन परिव्राजकेन गौरीशङ्करशिखरमारोढुं किल प्रवृत्तः । तत्र मध्ये मार्गं स्खलितपदो निपपातागाधे निम्ने किल शिलाभूयिष्ठे ।"

विश्वसारः - (ससन्तोषम्) "किमिदं सत्यम् ?"

वीरसिंहः - "अक्षरशः सत्यम् । प्रत्यक्षदर्शी कथितवान् ।"

विश्वसारः - प्रासादे समृद्धान्भोगान्विहाय किमर्थं हिमाचलं गतो विशाखः । प्रायस्तत्कारणं तस्य परिव्राजकस्य विदितं स्यात् । स किमकथयत्तव पित्रे ?"

वीरसिंहः - "अस्त्रविद्यासाधनाय तपश्चरितुं किल गतः ।"

विश्वसारः - "अस्त्रविद्यां साधयित्वा समग्रं भारतखण्डं जयेयमिति तस्य मतिः स्यात् ।"

वीरसिंहः - "स एव तस्योद्देशः स्यात् ।"

विश्वसारः - (सकरुणमिव) "महानुद्देशो दुर्दैवेन विफलीकृतः । सखे ! कियतः कालात्पूर्वमिदं विषमसङ्घटनं संवृत्तम् ?"

वीरसिंहः - "वर्षात्पूर्वम् ।"

विश्वसारः - "कुत इमं वृत्तान्तं तव पिता सार्वभौमाय नाकथयत् ?"

वीरसिंहः - "असमयः सः । भगिनीदुहितुर्विवाहोत्सवे सन्तुष्टायाः कनिष्ठदेव्याश्चित्तं दुःखविवशं कर्तुं मम पिता न पारितवान् । सम्प्रति ये हिमाचलं गताः त एव प्रतिनिवृत्ताः कथयेयुरिति मम पितुराशयः ।"

विश्वसारः - "कः स परिव्राजकः यस्तव पित्रे समाचारमिमं कथितवान् ।"

वीरसिंहः - "तातस्तस्य नाम मह्यं नाकथयत् । तातस्य ज्ञातपूर्व एव सः । मया त्वनुमितम् । स रणन्धरस्य पिता स्यादिति ।"

विश्वसारः - "सखे मौद्गल्य ! अयं समाचारस्त्वया गुप्तमेव रक्षणीयः ।"

वीरसिंहः - "जानामि तत् ।"

विश्वसारः - (मन्दस्वरेण) "किं सन्तोषेण वर्तते भगिनी विलासवती ?"

वीरसिंहः - "सा यद्यपि पूर्णं विश्वसिति तथापि मध्ये समागच्छन्ति विघ्नानि तरितुं महत्कष्टं भवति । भ्रामर्यां विफलो वीरमित्रः सम्प्रति मम भगिन्यर्थं प्रयतते । अन्वमोदेतां मम माता मातुलश्च । मम

प्रतिबन्धात् कार्यं तत्कालप्रतिहतमासीत् । यदि मातुलो दृढं निर्बन्धं कुर्यात्तदा मम प्रतिबन्धकशक्तिः दुर्बला स्यात् । स चेन्मह्यं कुप्येन्न दद्यात्सुलक्षणाम् । तस्माद् भर्तृदारकः शीघ्रं परिगृह्णातु विलासवतीम् ।"

विश्वसारः – (क्षणं मौनेनधिस्थित्वा) "सखे ! किं सत्यसेनस्य स्थानं ज्ञातं तव पित्रा ?"

वीरसिंहः – "न स सार्वभौमभयात् त्रिविष्टपदेशं किल गतः ।" (स्वगतम्) "अस्मिन्मम कल्पनास्त्रं निष्फलमिवाभूत् । अशक्तोऽयं ज्येष्ठपुत्रः । पितुरन्तिके स्थातुमपि न प्रभवेत् । आस्तां सम्भाषणं दूरे ।"

विश्वसारः – "सखे ! सप्ताहमध्ये सार्वभौमेन सह विलासवती परिणयम् अधिकृत्य सम्भाषिष्ये ।"

वीरसिंहः – "एवं चेन्न किमपि कष्टम् । तावन्तं कालमुपायैः प्रतिबद्धुं ममास्ति शक्तिः ।"

विश्वसारः – "सखे ! अन्यद्राजकार्यं किमपि विद्यते सम्भाषितुं सम्प्रति प्राप्तकालम् सुकर्मणः सहस्रपतित्वं कस्मै देयम् ?"

वीरसिंहः – "दण्डनायको जयकेतुः किं सूचयति ?"

विश्वसारः – "निजं जामातरं देवशर्माणम् । स कीदृशः ? तव सैन्ये किल सः ।"

वीरसिंहः – "तस्य योग्यतायाः शतपतिपदव्येवाधिका । अथवागतात् सहस्रपतेः सुकर्मणः स वरम् । श्वशुरस्य दण्डनायकस्य सोऽनुरूपो जामाता सहस्रपतिः । यावन्तं कालं स वृद्धोऽङ्गानां मूलबले तावन्तं कालं न तस्य वृद्धिः । (सदम्भम्) पश्यतु मां भर्तृदारकः । अचिरात्कर्तास्मि तद्दीप्तं बलं ममाधिकारकाले ।"

विश्वसारः – "तव विवाहः कदा स्यात् ?"

वीरसिंहः – "बहूनि विघ्नानि कुर्वन्ति परिपन्थिनः । तस्माद्विलम्बो भवति ।"

इत्यभिधाय प्रसङ्गोपलब्धं समयमुपयुञ्जानो वीरसिंहः पुनरेवमाह ।

"यदि विवाहात्प्रागेव भर्तृदारकेण मह्यं दण्डनायकपदवी दीयेत तर्हि तानि सर्वाण्यपि विघ्नानि दूरीभवेयुः ।"

विश्वसारः – "अयं वृद्धस्तत्र लम्बमानस्तिष्ठति । कथं स निष्कास्यः ?"

वीरसिंहः – "यदि त्वं दण्डनायकपदवीमधुनैव विसृजेस्तर्हि देवशर्मणे सहस्रपतिपदवी दीयेतेति भर्तृदारकेण वक्तव्यम् । तदा कार्यं सिद्धं स्यात् ।"

एतावान्कथोपयुक्तो विश्वसारवीरसिंहयोर्मिथः सम्भाषणांशः । यथा तत्कालवातं चलत्प्रकृतिको विश्वसारो वीरसिंहस्य सूचनमङ्गीकृतवान् । यथानुमितं तस्येप्सितं सम्पन्नम् । देवशर्मा सहस्रपतिः कृतः सुकर्मणः

स्थाने । वीरसिंहो दण्डनायकः कृतो जयकेतोः स्थाने। महाप्रतीहारिणो विजयकेतोः पुत्रो गोवर्धनः सेनापतिदण्डनायकयोः सूचनमनुसृत्य सम्राजा वीरसिंहस्य स्थाने सहस्रपतित्वेन नियुक्तः। तथा रणवीरो नाम कश्चिद्दशपतिः शतपतित्वेन देवशर्मणः स्थाने । इममेव रणवीरं मनोरमाया अनुरूपेषु त्रिषु मध्ये राजकाल्यगणयदिति विषयः पाठकैर्न विस्मर्तव्यः ।

तस्मिन्नेव दिने सामन्तरिपुञ्जयदेवः कमपि विषयमधिकृत्य सहपुत्रेण चिरं व्यवादीत् । नाभूत्किमपि पर्यवसानम् । अस्ति तत्र वीरसिंहस्य सम्बन्धः ।

तदा विदितविवादार्थो वीरसिंहः सहप्रियसखेन शम्बरेण निषादनायकेन सह सायं सदाशिवमन्दिरे समभाषिष्ट चिरम् । प्रायस्तयोः सम्भाषणार्थः पर्यवसितः । अथ मन्दिरे देवतोपस्थानगीतध्वनिरतिमनोहरोऽभूत् ।

२३. पालय धर्ममदृष्टशरीरं कालय पापमनिष्टविसारम् ।
शर्ववधूटिसुधारकृपाणे पार्वति शाधि कुलानि खलानाम् ।।

ततो वीरसिंहः शम्बरश्च मन्दिरस्यान्तरमविक्षताम् । व्यलोकिषातां तत्र विद्युतमिव ज्वलन्तीं लतामिव सुकुमारीमप्सरसमिव कमनीयां वदनप्रसादप्रतिबिम्बितसच्छीलां विद्वत्कवीश्वरीमान्ध्रचक्रवर्तिनो ज्येष्ठां दुहितरं सामन्तेन्द्रसेनस्य मगधसेनापतेः प्रियां भागिनेयीमम्बिकाम् उपतिष्ठमानां मधुमतीम् । प्रत्याख्यातदीपप्रभां ज्वलन्तीं तामालोक्यैतौ भीतावभूतामस्थाने। उलूकाविव सूर्यप्रभातस्ततो निवृत्तौ तस्मिन्नेव क्षणे । तस्यामतिक्रान्तायां तयोस्तद्भयमप्यन्तरधात् । वीरसिंहस्य

पुनरुन्नमितमभूच्छिरः । ततोऽप्यधिकं शम्बरस्य ।

पथि गच्छन्वीरसिंहो बहुभिर्नमस्कृतः । बहुभिरभिनन्दितः । बहुभिरनामयं पृष्टः बहुभिराशीर्भिर्वर्धितः । बहुभिरभिष्टुतः स दण्डनायको ह्यभूत् । नायं वीरसिंहस्य बाहुबलमहिमा । स दग्धः प्रागेव पूर्णायाः शस्त्रीज्वालायाम् । अनुजायाः प्रफुल्लेन्दीवरदृशो विलासवत्याः कटाक्षाणामेष पराक्रमः ।

एकोनविंशं प्रकरणम्

# सुवर्णा इमे न पणाः

सम्प्रति रागः पश्चिमाशामाक्रामीत् । मधुमती मन्दिरस्य गर्भगृहान्मण्डपम् उपगता । तदा तत्र मधुमत्या दृष्टा विषण्णवदना तिष्ठन्ती भ्रामरी ।

मधुमती - "सखि ! वारकर्मणि ! किं ते कुशलम् ?"

भ्रामरी पद्येन प्रत्युत्तरमदात् ।

(शशिवदनावृत्तम्)

२४. न कुशलमस्मिञ्जनुषि ममास्ति ।
शनिरशिवो मां प्रियसखि शास्ति ॥

मधुमती - "मन्ये; मातृशोकेनैवमुद्विग्ना सखी ।"

भ्रामरी - "नास्ति मे मातृशोकः । सा पापिष्ठं लोकमिमं त्यक्त्वा सुखिन्येवाभवत् ।"

मधुमती - "श्रुतं मया सख्याः पूर्वजो भ्राता निजं राजकीयोद्योगं त्यक्त्वा वैराग्येण तपश्चरितुं हिमाचलं गत इति । मन्ये तेन दूनं सख्याश्चित्तम् ।"

भ्रामरी - "अभिनन्दनीय एव वेश्यापिशाचिकामुखान्मुक्तः स बन्धुः । न शोचनीयः अहमेव केनाप्यसुखावहेन पारतन्त्र्येण दूषिता न शर्म लेभे । दारिद्र्यादपि तद्दुःखप्रदं भवति ।"

मधुमती - (मन्दस्वरेण) "किं तत्पारतन्त्र्यम् ?"

भ्रामरी - "प्रियसखि शृणु ।

२५. सुदृशि युवा यज्जनयति रक्तिम् ।
तदपरतन्त्रां क्षपयति शक्तिम् ।।

मधुमती - (स्वगतम्) "कमपि दुर्लभं कामयमाना सेयं तप्यतीति ज्ञायते ।" (प्रकाशम्) "जानामि सखीमकपटसरलवादिनीं स्वभावात् । तस्मान्मया च किमपि निष्कपटं पृच्छ्यते । किं दुर्लभे रागो भवति दुःखाय सख्याः ? उताहो सुलभेप्यगोप्ये ।"

भ्रामरी - "स कामिनीनां सुलभः । दुर्लभो धर्मं चरितुं दाम्पत्यम् इच्छन्तीनाम् । अस्तु सा कथा । अहं स्वभावतः परिणयद्वेषिणी । यतः -

२६. भवतु वधूनां पतिसुखमिष्टम् ।
परवशभावो महदिह कष्टम् ।

२७. इह बहु कर्तुं न परवतीत्वम् ।
स्तुतमतिमात्रं तदपि सतीत्वम् ।।

मधुमती - "सत्यमुक्तं सख्या ।

२८. सदमृतमिन्दोरतुलितसारम् ।
भवति बतेतो हिमममपि घोरम् ।।

भ्रामरी - (हसन्ती)

२९. निरुपमशोभा शशिवदनेयम् ।
गुणशतमस्याः कविजनगेयम् ।।

मधुमती भ्रामर्याश्चमत्कृतिमज्ञासीत् । भ्रामरी यन्मधुमत्याः कवितां मधुमतीं च श्लेषेणाश्लाघिष्ट । मधुमती पुनः प्रकृतमनुसृत्याह - "परिणयद्वेषिण्यां सख्यां को वा रक्तिमजनयदाकर्षकः ।"

भ्रामरी - "धनेन मे मातरं भ्रातरं च प्रलोभयन्कश्चन शठः । ययोरर्थे पापेन रागपङ्केनाहं दिग्धा तौ नाधुना । पङ्क एवावशिष्टः । क्षालितोऽपि नापयाति । निन्दितोऽपि नोत्सृजति । भर्त्सितोऽपि न लक्षीकिरोति । प्रियसखि ! तमेवाहमवादिषमशिवं शनिम् ।"

मधुमती - "यदि स शठः सखीं सहधर्मचारिणीं कर्तुमङ्गीकुर्यात्तर्हि शनिरेष शुभः स्यादिति मन्ये ।"

भ्रामरी - "तदा भवत्वेष शनिस्तृसः । स शनिः कण्ठे लग्नः स्यात् । तस्मादेष एव वरम् ।"

मधुमती - (निःश्वस्य)

३०. अमलसतीनां शतमिहलोके ।
अचपलकन्या न भुवि न नाके ।।

भ्रामरी – "सत्यमुक्तं सख्या । वयं सर्वं विवाहे कष्टं जानीमः । तथापि तस्मिन्कर्दमे निपतामः । प्रकृतिर्दुर्निवारा ।"

मधुमती – "प्रियसखि ! एकं कालोचितं वक्तव्यमुच्यते प्रीत्या न सम्पद्दर्पात् । क्षमतां मां तत्र भवती । पित्रोः स्वर्गत्या भ्रातुश्च प्रवज्यया भवत्यगतिका संवृत्ता । इतःपरं स्वातन्त्र्येण जीवयात्रां निर्वर्तयितुं द्रव्यमावश्यकमित्यनपोद्यो विषयः। तत्राहं यत्किञ्चित्साहाय्यकं कर्तुं यद्यवकाशं लभेम तर्हि कृतार्था स्याम् ।"

भ्रामरी – "प्रियसखि ! सन्तुष्टास्मि भवत्या उदारेण सान्त्वनेन । ईश्वर्येव द्रक्ष्यत्यल्पं मे जीवितयात्राविषयम् । सम्प्रति मम चतुर्विंशतिः पणा आवश्यकाः । अस्माभिरापणाय दातव्यं तावदेवास्ति ऋणम् । तावद्ददातु भवती । अलं तावता ।"

मधुमती – "अल्पो भार ईश्वरपर्यन्तं कुतो नेयः ? मनुष्या एव तं वोढुं नियोज्या इति मन्ये । अथवा मनुष्यैश्च कृतमीश्वरस्यैव कृतम् । तस्याज्ञया विना तृणमपि न चलतीत्याहुः ।"

भ्रामरी – "श्वो भोजनायाद्य सम्पादनं रक्षकस्यावमाननमिव भवति । स मनुष्यस्याशादूषितस्य प्रयत्नः । ईश्वरं ये विश्वसन्ति न ते दिनान्तरार्थं प्रयतन्ते ।"

अथ मधुमती काञ्चीलम्बिनीं कोशसञ्चिकामुद्घाटच चतुर्विंशतिं नाणकानादाय भ्रामर्याः पाणौ न्यस्यति । भ्रामरी तानद्राक्षीत् । ते यद्यपि कार्षिकास्तथापि चम्पकगौराः । अथावादीदेवं भ्रामरी -

''सखि, सुवर्णा इमे न पणाः ।''

मधुमती - ''सखि ! यावन्मह्यं त्वया दत्तमृणं तावदेव मया प्रत्यर्पितम् । त्वया मह्यं दत्ताः सुवर्णाश्चतुर्विंशतिर्निरुपमशोभेति पद्यद्वारा । मया नाणकद्वारा प्रत्यर्पिताः ।''

भ्रामरी - ''सन्तुष्टास्मि सख्याः वचनचमत्कारेण । तथापि बिभेति ममान्तरात्मा दिनान्तरार्थे द्रव्यसङ्ग्रहणं कर्तुम् ।''

मधुमती - ''अप्रयत्नेन यल्लभ्यते तदीश्वरेण साक्षाद्दत्तमिति साधवो मन्यन्ते । सखी च न प्रायतिष्ट सुवर्णार्थम् । तथापि लब्धाः सुवर्णाः । एते चेत्तिरस्क्रियेरन् ईश्वरस्य करुणैव तिरस्कृतेति वक्तव्यम् । अस्त्वीश्वरस्य कथा । तव सखी तिरस्कृता भवेत् । दक्षिणापथसम्राजः पुत्री किं दत्तं पुनः प्रतिहर्तुं शक्नुयात् ?''

भ्रामरी - (हसन्ती) ''सम्राडपत्यैः सह व्यवहारः कष्ट इत्यविज्ञाय मया सखी याचिता । ममैवायमपराधः । एकमहं याचे सखीम् । एते सुवर्णाः पणीकृत्य दीयन्ताम् । मम जीवितयात्रार्थं पणा एवावश्यकाः । न सुवर्णाः ।''

मधुमती - (स्वगतम्) ''इयं विश्वसारेण वञ्चिता । अस्याः सम्राडपत्या-

धिक्षेपणधोरणी तद्व्यनक्ति ।" (प्रकाशम्) "भवतु । प्रथमं सखी गच्छतु गृहान् । अहं प्रेषयिष्यामि पणान्मनुष्यद्वारा ।"

भ्रामरी – "मनुष्यद्वाराप्रेषणम् ? मास्तु अहमेव गृहीत्वा गच्छेयम् । अहमपि मनुष्यजातीयैव भवामि ।"

मधुमती – (हसन्ती) "सखी सुतरां भाषाकुशलापि गणितं न जानातीति मन्ये । सुवर्णचतुर्विंशतेः पणाः प्रायः पञ्चमनुष्यनेयो भारः स्यात् ।"

भ्रामरी – "सुवर्णचतुर्विंशतेः पणाः कति भवेयुः ?"

मधुमती – "षट्छतोत्तराणि नव सहस्राणि । तचुःशतपणमूल्यो ह्येकैकः सुवर्णः ।"

भ्रामरी – (साश्चर्यम्) "तावद्धनमधुना दीयेत किं मह्यै सख्यै ?"

मधुमती – "न दीयेत । दत्तमेवाभूत् ।"

भ्रामरी – "न जानाम्यहं ग्रामवासिनी सुवर्णस्य महिमानम् । एकः सुवर्णो मादृश्याः संवत्सरजीवितायालम् ।"

मधुमती – "आर्यसुकर्मणस्तु सार्धाः सप्तत्रिंशत्सुवर्णा अपि मासजीविताय नाभूवन्पर्याप्ताः ।"

भ्रामरी – "सत्यम् । अधुना जानामि चोरादपि क्रूरा वेश्येति ।"

मधुमती – "भोगलम्पटाः पुरुषा एव तादृशीं क्रूरजातिमुताहो नीचजातिं विचित्रधर्मशास्त्रद्वारा सृष्ट्वा निजकामानलस्येन्धनानि सङ्गृह्णन्ति । प्रियसखि ! सर्वथा दुर्बला नारी निरपराधा । अयं पुरुषकल्पितस्य जातिनिबन्धनशास्त्रस्यापराधः ।"

भ्रामरी – "सत्यम् ।"

मधुमती – "गच्छावः । यावत्सखीगृहान्गाच्छेत्प्रायस्तावदेव मम मनुष्यः पणानादाय प्राप्नुयुः ।"

भ्रामरी – "अहमेव पञ्चवारं वहन्ती नयामि । नाङ्गीकरोमि मनुष्यद्वारा प्रेषणनम् । "

मधुमती कष्टेन भ्रामरीसूचनमङ्गीकृत्य तां स्वगृहमनैषीत्।

पणपूर्णाऽभूद् भ्रामर्याः पेटिका । "चतुर्विंशतिवर्षपर्यन्तं ममाहारो मिलितः ।" इति सा करुणानिधिमीश्वरमस्तौषीत् । सुकर्मा यद्यपि भगिनीमनाथां विसृज्य गतवान् । तथापि तस्यै गृहमेकं परिकल्पितवान्वासाय । तस्योद्योगकाले न केवलमुद्योगकाले तावत्पर्यन्तजीवितकाल एव तेन कृतं गण्यं कार्यमिदमेकम् । यच्चतुःशतेन कार्षापणानामेकं साधारणगृहं वासार्थमक्रीणात् ।

## विंशं प्रकरणम्

## भवशर्मणश्चित्तसंस्कारः

सहस्रपतिपदवी नगरपालपदवी च तुल्ये गौरवे वेतने च । सहस्रपतिर्भवन्देवशर्मा भ्राता नगरपालेन तुल्यादाय गौरवोऽभूवं राजकीये रङ्गस्थल इत्यपारं सन्तोषमगात् । चरे धने तु स भ्रातुरधिकश्चाभूत् । कथम् ?

अपराजिता भवशर्मणि भ्रातृप्रीतिमतीति पाठकेभ्यः प्रागेवावेदितम् । आत्मना प्रयतिते राजपुत्रसम्बन्धे विफले जाते सा किल बभूव सुतरां विषण्णा । तस्मादुपकारान्तरं भवशर्मणः कुटुम्बाय सा किल कर्तुमियेष । भवशर्मणो ज्येष्ठपुत्राय देवशर्मणे सा सुवर्णानां पञ्चसहस्रं चैत्रकृष्णैकादश्यां रात्रावदात् । पिता पुत्रावाहूय पितुः सन्निधावेव पुत्राय तद्धनं प्रादात् । अवादीच्चैवम् – "पित्रोः कनिष्ठे पुत्रे प्रीतिः । मध्यमे सर्वेषां पौराणां सार्वभौमस्य च प्रीतिः । अतस्तयोरभ्युदये भाविनि न मे सन्देहः । अयं ज्येष्ठो मम नितान्तं भक्तः । कृतदारश्च मे पतिबन्धूनां कुटुम्बे । तस्मादस्मै प्रादां यत्किञ्चिद्वः कुटुम्बाय मया दित्सितम् ।"

अयं देवशर्मणो विष्णोरपि चराधिक्ये हेतुः सूक्ष्मबुद्धिर्भवशर्मा देवशर्मणो विभागकारणं स प्रत्यज्ञासीत् । तेनापराजितोद्देशः प्रागेव ज्ञातस्तद्धनं पृथग्भोक्तुमेव स विभक्तोऽभिवदति । तदा भवशर्मणा ज्येष्ठमध्यमयोः पुत्रयोस्तारतम्यं ज्ञातम् । असङ्कीर्णस्वार्थपरः पूर्वः परिशुद्धत्यागी पर

इति । उभयतारतम्यपरिशीलनतः पुरस्ताद्विभागकाल एव स उत्तरं स्पृहणीयं गुणं विजानंस्तेन स्वयं च संस्कृतचित्तोऽभूत् । सम्प्रत्यभूद्भूयः संस्कृतचित्तः । औदार्यं गुण एव महान्नोन्माद इति । तस्माद्गुणवत्स्वादरं प्रशंसन्ति सन्तः । यत्रादरस्तद्गुणानुकरणप्रीतिर्हि जायते प्रकृत्या नराणाम् ।

एवं संस्कृतात्मा भवशर्मा स्वजीवितयात्रायै पृथक्कृतं धनमपि सद्य एव विभज्य चतुर्भ्यो दत्तवानपत्येभ्यः । सन्तोषेण प्रत्यग्रहीद्देवशर्मा । इतरे पितुर्निर्बन्धादेवं भवशर्मा तस्यामेव रात्रौ सम्यक्पाणी प्रक्षाल्य शुद्धतमोऽभूत् । न केवलं शुद्धः विशालदृष्टिश्चाभूत् । तदैव स सत्यं पण्डितमात्मानममंस्त । तदा तस्य विष्णोश्चन्द्रप्रभायाश्चैकैकं कार्यं युक्तमेवास्फोरीत् ।

एकविंशं प्रकरणम्

## पुनरवलोकनम्

चैत्रकृष्णद्वादश्यां रात्रौ प्रथमे यामे विष्णुशर्मा रणन्धरस्य गृहं गतः । विशालाक्षो देववाटिकां गतः । अस्ति पूर्णा गिरिव्रजे रणन्धरगृहे । अधुनैव पूर्णारणन्धरौ भोजनं कृत्वा पठनशालायामुपविष्टौ । गृहदासमुखाद्विष्णुं द्वारोपस्थितं श्रुत्वा रणन्धरः सम्भ्रमेण गत्वा तं सखायं करे गृहीत्वा शालाया अन्तरानीतवान् । आगतं तमासनादुत्थिता पूर्णा स्वागतेनाभ्यनन्दीत् ।

उपविष्टौ पूर्वं विष्णुरणन्धरौ । स्थितैव लज्जमानेव पूर्णा । स्थितं तत्तस्याः परं दर्शनीयमभूत् । अङ्गुष्ठेन भूमिं लिखंस्तस्याश्चरणः शाणे संस्क्रियमाणः कामस्य कमलबाण इवापुषच्छोभाम् । कुञ्चितभ्रूसंहितं नयनद्वयं धनुषि सन्धीयमानमिव नीलोत्पलशरद्वयम् । अन्तर्गुप्तो हासः काले प्रयोक्तुं रक्षित इव नवमल्लिकासायकः यं पूर्णावदने विष्णुरद्राक्षीत् स किं प्रसादः सहजः ? उताहो प्रेमा ? केवलो वा लावण्यरसः ? अथवा तत्र विशेषतः स्फुरन्प्रदीपप्रकाशः । आहोस्विदन्तर्गुप्तो हासः ? यथा यथा स भावयति तथा तथा तस्य प्रत्यभासीत् ।

पूर्वस्मान्मुखादप्यद्य मुखं पूर्णायाः शोभयाऽधिकमिवाभासिष्ट विष्णुशर्मणश्चक्षुषोः । पूर्वेभ्यः कटाक्षेभ्योऽप्यद्य कटाक्षाः शाता इवानुभूतास्तस्य मनसा ।

आमोदरामणीयकाभ्यां पुण्डरीकं नैर्मल्येन चन्द्रकान्तमणिदर्पणं प्रकाशेन पूर्णिमाचन्द्रमण्डलं पूर्णाया आननं दीपमप्यपवार्य वष्णुशर्मा तदा बहुकृत्वो दृष्टवान् । न त्वेव तृप्तिं गतः । किं बहुना ? तस्मिन्गुप्त-दर्शनकोलाहले पूर्णामुपविशेति कथयितुमपि व्यस्मार्षीत् सः । पूर्णायाः प्रेक्षितान्यपि नेतस्ततः केन्द्रीकृतास्तस्यैवासेचनकाकृतेर्यूनो वदनमण्डले। एवं क्षणान्कतिपयानवर्तिष्ट निःशब्दमपि भावसङ्कुलं तद्रङ्गस्थलम्।

अथ कालोचितं स्मृत्वा पूर्णामुपवेष्टुं विष्णुः प्रार्थितवान् । विष्णोर्वचः पूजयन्त्युपविष्टा पूर्णा । अथारब्धः प्रसङ्गः ।

रणन्धरः – "किं सम्प्रति राजकार्येणागतो न नगरपालः ? उताहो व्यक्तिकार्येण सखा विष्णुशर्मा ?"

विष्णुशर्मा – "सखे ! बन्धुकार्येणागतोऽस्मिवो बन्धुः ।"

रणन्धरः – "वर्धामहे विष्णोर्बन्धुत्वेन वयमिमं । वचसैव वर्धामहे । किमु वक्तव्यं क्रियापर्यवसाने ?"

विष्णुशर्मा – "प्रथमं सख्युः सम्मतिं विज्ञायानन्तरं पितुः पुरो वदेयम् ।"

रणन्धरः – (स्वगतम्) "किमयं मे चन्द्रप्रभां दातुमिच्छति ?" (प्रकाशम्) "वदतु प्रियः सखा ।"

विष्णुशर्मा – "सखे ! अस्ति मे प्रियतरा सहोदरा । तां तुभ्यमर्पयितुं

मनो मे प्रेरयति । अत्रानुजा सम्मतिमदात् । यदि सखा सम्मतिं दद्यात्ततस्तातस्य पुरो निवेद्य साधयेयं कार्यम् । सख्युः सम्मतिग्रहणात्पूर्वं सख्ये किमप्यस्ति निवेदयितव्यम् । अपराजिताद्वारा मम पित तां प्रथमं राजपुत्रायैकपत्नीव्रतं प्रतिजानते दातुं वाचं दत्तवान् । समयविरोधेन सोऽन्यां परिणीय भूयो विलज्जश्चन्द्रप्रभां वरयते । यदि स्यात्सख्युः प्रबलाद्राजपुत्रादत्र कार्ये भयं तर्हि नाहं प्रतिबध्नीयाम् । आमरणं कन्यामेव वा गृहे रक्षेम । न तु तस्मै वितथवचनाय कदाचिदपिद द्यामेति निश्चयः ।''

रणन्धरः - ''सन्तुष्टोऽस्मि प्रियसखस्य ऋजुनोपन्यासेन । वयं चास्माकं पूर्णां भवते दातुं सङ्कल्पयामः । भवत्सूचिते सम्बन्धे निर्वृत्ते ततो दत्तवन्तो वयं न प्रतिगृह्णीम इति यद्युच्येत तर्हि निजदृढसङ्कल्पप्रतिकूलमिदं कार्यमङ्गीकर्तुं न प्रभवेम । असाराद्राजपुत्राद् भयं तु न मे स्वप्नेऽपि ।''

विष्णुशर्मा - ''ज्ञातः प्रियसखस्याशयः। चन्द्रप्रभायाः प्रतिग्रहीतारः कण्वाः । पूर्णायास्तु दातारः कश्यपाः। अतो नात्र विनिमयदोषः । तस्मान्नायं सम्बन्धः प्रतिबन्धको भवद् भिः सङ्कल्पितस्य सम्बन्धस्य ।''

रणन्धरः - ''यदि कश्यपा एव दास्यन्ति तर्हि पूर्णां भरद्वाजाः प्रतिगृह्णीयुरिति सख्युर्वाक्यस्यार्थं जाने । अत्र किमहं सत्यभाववित्सख्युर्वचनस्य ?''

विष्णुशर्मा - ''तटस्थेन धर्मशास्त्रज्ञेनेव मयोक्तम् । नाङ्गीकुर्वता वरेणेव । तस्य काले स विचारणीयो विषयः । अयं तु विषयान्तरविमर्शनकालः ।''

रणन्धरः – "शृणोतु मां प्रियसखः । पूर्णायाः सर्वो भारो मयि निहितो मातुलेन । तां चाहं प्रियसखाय दत्त्वा कृतकृत्यो भवितुमिच्छामि । तस्याः परिणयात्पूर्वमहं दारग्रहणं कर्तुं नोत्सहे । तस्मात्सख्युः प्रतिवचनदानायायमप्राप्तः कालः ।"

रणन्धरस्य वचनमाकर्ण्य निरुत्साहोऽभूद्विष्णुः । तदैव पूर्णां परिणेतुं स्वयमशक्तः । आत्मना हि प्रतिज्ञातं परन्तपसङ्घमनुन्मूल्य दारग्रहणं न कुर्यामिति । तावन्तं कालं चन्द्रप्रभां कन्यामेव स्थापयितुं नास्ति स्वस्य शक्तिरिष्टं वा । अथाह स मन्देन स्वरेण–"परन्तपसङ्घमनुन्मूल्य दारग्रहणं न कुर्यामिति मम प्रतिज्ञा । यद्यपि काश्यपीं प्रतिग्रहीतुं मम भूयांत्सन्तोषस्तथापि प्रतिज्ञाविरोधेन किमपि कर्तुं नोत्सहे । तावन्तं कालं पूर्णां कन्यामेव स्थापयतेति वक्तुं मम नास्त्यधिकारः । न चास्ति सम्मतिः । एतावन्मया वक्तुं शक्यते । उपस्थिते मम दारग्रहण-काले यदि कन्यैव पूर्णा यदि दित्सन्ति च भवन्तस्तर्हि भवदीय एव भवेयम् । भूयः सकृच्छ्रोतुमिच्छामि प्रियसखस्याशयम् ।"

रणन्धरः – (स्वगतम्) "परन्तपसङ्घमेवोदाहरति नोदयङ्करं सङ्घम् । इदमेकं शुभम् । अहं यद्यस्मिंत्समये दृढस्तिष्ठेयं विष्णोः पूर्णायां कदाचिद्वौरस्यं जायेत । तदनिष्टम्! तस्मादेवमभिधास्ये ।" (प्रकाशम्) "सखे ! यदि भवान् वाक्यं दद्यान्निजप्रतिज्ञानिर्वहणादनन्तरं पूर्णां परिगृह्णीयामिति । तर्हि भवतः सूचनं शिरसा गृह्णीयाम् । भवता निर्णीते काले भवदीयमनुजामाहोस्विद् भवता प्रदर्शितामन्यां नेमं...... ।

असमाप्तम्



Sri K. Natesan and Kavyakantha Ganapati Muni
A Sketch by Madam Jane Adams




Bhagavan Ramana Maharshi and Ganapati Muni
by Madam Jane Adams

।। वासिष्ठकाव्यकण्ठगणपतिमुनेः ग्रन्थमाला।।

Vāsiṣṭhakāvyakaṇṭhagaṇapatimuneḥ Granthamālā

# Collected Works of Vasishtha Kavyakantha Ganapati Muni

## Contents of all Volumes

## VOLUME 1

VOLUME 2

## 2. स्तोत्रग्रन्थमाला *stotragranthamālā*
## The Book of Adoration (Part Two)

| | | |
|---|---|---|
| **2.1.** | देवीस्तोत्रमञ्जरी *devīstotramañjarī* | Verses in praise of Goddess Uma (118 verses) |
| **2.2.** | श्रीत्रिपुरसुन्दरीगीतम् *śrītripurasunda-rīgītam* | Singing praise of Goddess Tripurasundari (18 verses) |
| **2.3.** | अमृताम्बापञ्चरत्नम् *amṛtāmbā-pañcaratnam* | Verses in praise of Amritamba – the consort of Narasimha (5 verses) |
| **2.4.** | सौन्दर्याम्बानिर्वाण-षट्कम् *soundaryāmbā-nirvāṇaṣaṭkam* | Verses on the liberation of Saunda-ryamba – the mother of Sri Ramana Maharshi (6 verses) |
| **2.5.** | रेणुकाषट्कम् *reṇukāṣaṭkam* | Verses on Renuka – the mother of Parasurama (6 verses) |
| **2.6.** | रेणुकासप्तकम् *reṇukāsaptakam* | Verses in praise of Goddess Renuka (7 verses) |
| **2.7.** | इन्द्राणीसप्तशती *indrāṇīsaptaśatī* | Verses in praise of Goddess Indrani – the consort of the Vedic godhead Indra (700 verses) |

| | | |
|---|---|---|
| **2.8.** | प्रचण्डचण्डीत्रिशती *pracaṇḍacaṇḍī-triśatī* | Verses in praise of Chinnamasta – one of the ten cosmic powers of the Divine Mother (300 verses) |
| **2.9.** | मङ्गलगौरीस्तोत्रम् *maṅgalagaurī-stotram* | Benedictory verses in praise of Goddess Gauri (8 verses) |

## VOLUME 3

### 3. स्तोत्रग्रन्थमाला *stotragranthamālā* **The Book of Adoration (Part Three)**

| | | |
|---|---|---|
| **3.1.** | श्रीरमणचत्वारिंशत् *śrīramaṇa-catvāriṁśat* | Verses in praise of Sri Ramana Maharshi (40 verses) |
| **3.2.** | शिवशतकम् *śivaśatakam* | Verses in praise of Shiva (100 verses) |
| **3.3.** | शिवस्तवराजः *śivastavarājaḥ* | Verses in praise of Shiva (72 verses) |
| **3.4.** | शिवसप्ततिनामस्तोत्रम् *śivasaptati-nāmastotram* | Seventy names of Shiva as mentioned in the Veda (8 verses) |
| **3.5.** | इन्द्रसहस्रनामस्तोत्रम् *indrasahasra-nāmastotram* | Verses having one thousand names of Indra as mentioned in the Rigveda (115 verses) |

| | | |
|---|---|---|
| **3.6.** | इन्द्रसहस्रे प्रथमं शतकम्<br>*indrasahasre pathamaṁ śatakam* | Verses in praise of Indra (100 verses) |
| **3.7.** | इन्द्रसहस्रे कटाक्ष-स्तबकः<br>*indrasahasre kaṭākṣastabakaḥ* | Verses extolling the graceful look of Indra (24 verses) |
| **3.8.** | इन्द्रविंशतिः<br>*indraviṁśatiḥ* | Verses in praise of Indra (20 verses) |
| **3.9.** | इन्द्रसप्तकम्<br>*indrasaptakam* | Verses in praise of Indra (7 verses) |
| **3.10.** | पवनाष्टकम्<br>*pavanāṣṭakam* | Verses in praise of Vayu (8 verses) |
| **3.11.** | श्रीनृसिंहपञ्चरत्नम्<br>*śrīnṛsiṁha pañcaratnam* | Verses in praise of Sri Narasimha (5 verses) |
| **3.12.** | श्रीयोगाञ्जनेयपञ्चरत्नम्<br>*śrīyogāñjaneya-pañcaratnam* | Verses in praise of Sri Yoganjaneya (5 verses) |
| **3.13.** | तारकरामनामस्तुतिः<br>*tārakarāma-nāmastutiḥ* | Verses singing the name of Sri Rama (16 verses) |

| | | |
|---|---|---|
| **3.14.** | कृष्णाक्षरमाला<br>*kṛṣṇākṣaramālā* | Verses on Sri Krishna in Sanskrit alphabetical order (50 verses) |
| **3.15.** | रामगीता<br>*rāmagītā* | Verses on Sri Rama (9 verses) |
| **3.16.** | गीतमाला<br>*gītamālā* | Garland of ten songs praising different Vedic and other godheads (225 verses) |
| **3.17.** | शिवगीतम्<br>*śivagītam* | Verses praising Lord Shiva (25 verses) |
| **3.18.** | रमणगीतम्<br>*ramaṇagītam* | Verses praising Sri Ramana Maharshi (4 verses) |

## VOLUME 4

### 4. तत्त्वग्रन्थमाला *tattvagranthamālā*
### The Book on Principles of Existence

| | | |
|---|---|---|
| **4.1.** | सदाचारबोधिनी<br>*sadācārabodhinī* | Code of conduct for human beings (81 verses) |
| **4.2.** | तत्त्वघण्टाशतकम्<br>*tattvaghaṇṭā-śatakam* | Verses on the principles of existence composed extempore in one hour as a part of an ashtavadhanam (100 verses) |

| | | |
|---|---|---|
| **4.3.** | *तन्त्रहृदयम्<br>*tantrahṛdayam* | A Tantra treatise on worshipping different aspects of the Divine Mother (192 verses) |
| **4.4.** | अक्षरावलिः<br>*akṣarāvaliḥ* | Verses describing Sanskrit syllables (alphabet) and their corresponding deities (21 verses) |
| **4.5.** | श्रीरमणगीता<br>*śrīramaṇagītā* | Teachings of Sri Ramana Maharshi (303 verses) |
| **4.6.** | सद्दर्शनम्<br>*saddarśanam* | Sanskrit rendering of an original Tamil text "*ulladu narpadu*" of Sri Ramana Maharshi (44 verses) |
| **4.7-9.** | *विश्वमीमांसा<br>*viśvamīmāṁsā* | These three (4.7-9) deal with several spiritual and metaphysical aspects of the principles of existence (679 verses) |
| **4.10.** | *धर्मानुशासनम्<br>*dharmānu-śāsanam* | Verses dealing with the Hindu religious injunctions (39 verses) |

---

* Incomplete writings

VOLUME 5

## 5. सूत्रग्रन्थमाला *sūtragranthamālā*
## The Book of Aphorisms (Part One)

| | | |
|---|---|---|
| **5.1.** | महाविद्यासूत्रम्<br>*mahāvidyāsūtram* | On the ten cosmic powers of the Divine Mother (705 aphorisms) |
| **5.2.** | राजयोगसारसूत्रम्<br>*rājayogasārasūtram* | Essence of Rajayoga (103 aphorisms) |
| **5.3.** | इन्द्रेश्वराभेदसूत्रम्<br>*indreśvarā bhedasūtram* | Proclamation of the non-difference between Indra and Ishwara (37 aphorisms) |
| **5.4.** | चतुर्व्यूहसूत्रम्<br>*caturvyūhasūtram* | Four main aspects of the Indra of the Rigveda (162 aphorisms) |
| **5.5.** | रुद्रकुटुम्बसूत्रम्<br>*rudrakuṭumba sūtram* | Description of the family of Rudra (42 aphorisms) |
| **5.6.** | सृष्टिसूत्रम्<br>*sṛṣṭisūtram* | On Creation (33 aphorisms) |
| **5.7.** | ईश्वरमीमांसा<br>*īśvaramīmāṁsā* | Description of the true nature of Ishwara (65 aphorisms) |
| **5.8.** | क्रियाशक्तिमीमांसा<br>*kriyāśakti-mīmāṁsā* | On the Divine power of action (24 aphorisms) |

| | | |
|---|---|---|
| **5.9.** | सिद्धान्तसारसूत्रम्<br>*siddhāntasāra-sūtram* | The essence of decisive truth principle (42 aphorisms) |
| **5.10.** | मनीषासङ्ग्रहः<br>*manīṣāsaṅgrahaḥ* | A manual of spiritual science (120 aphorisms) |
| **5.11.** | अथ शान्तितपोबोधानां फलनिरूपणम्<br>*atha śāntitapobodhānāṁ phalanirūpaṇam* | Determining the fruits of peace, austerity and knowledge (9 aphorisms) |
| **5.12.** | गायत्रीव्याख्यानम्<br>*gāyatrīvyākhyānam* | Explanation of the Gayatri Mantra of Rishi Vishwamitra (48 aphorisms) |
| **5.13.** | योगव्याख्यानम्<br>*yogavyākhyānam* | On Yoga (48 aphorisms) |
| **5.14.** | सीताव्याख्यानम्<br>*sītāvyākhyānam* | On Sita – the consort of Sri Rama (51 aphorisms) |
| **5.15.** | कृष्णव्याख्यानम्<br>*kṛṣṇavyākhyānam* | On Sri Krishna (75 aphorisms) |
| **5.16.** | तत्त्वसामान्यमीमांसा<br>*tattvasāmānya-mīmāṁsā* | A brief enquiry into the principles of existence (20 aphorisms) |
| **5.17.** | *तत्त्वमीमांसा<br>*tattvamīmāṁsā* | The principles of existence (245 aphorisms) |

| | | |
|---|---|---|
| **5.18.** | प्रमाणपरीक्षा *pramāṇaparīkṣā* | Explaining Pramana, a means to attain Prama or a certain Knowledge (50 aphorisms) |
| **5.19.** | समवायपरीक्षा *samavāyaparīkṣā* | Explaining Samavaya or the perpetual co-inherence that lies between a substance and its qualities (14 aphorisms) |
| **5.20.** | अभावपरीक्षा *abhāvaparīkṣā* | Explaining Abhava or non-existence, one of the six pramanas of the Vedanta philosophy (40 aphorisms) |
| **5.21.** | पञ्चजनचर्चा *pañcajanacarcā* | On untouchability (89 aphorisms) |
| **5.22.** | गोत्रप्रवरनिर्णयः *gotrapravara-nirṇayaḥ* | Determination of the family sub-divisions (200 aphorisms) |
| **5.23.** | विवाहधर्मसूत्रम् *vivāhadharma-sūtram* | On Hindu laws and custom of marriage (151 aphorisms) |
| **5.24.** | शब्दप्रमाणचर्चा *śabdapramāṇacarcā* | An enquiry into the authority of Vedas (166 aphorisms) |
| **5.25.** | जैमिनीयतर्कवार्तिकम् *jaiminīyatarka-vārtikam* | A new interpretation of the aphorisms of Jaimini (348 aphorisms) |

| | | |
|---|---|---|
| **5.26.** | पञ्चममीमांसा *pañcamamīmāṁsā* | On five kinds of people (130 aphorisms) |
| **5.27.** | दर्शनमाला *darśanamālā* | On Metaphysics (121 aphorisms) |
| **5.28.** | गणपतिदर्शनम् *gaṇapatidarśanam* | Spiritual thoughts of Ganapati Muni (95 aphorisms) |
| **5.29.** | *शक्तिदर्शनम् *śaktidarśanam* | On the dynamic aspect of the Divine (109 aphorisms) |
| **5.30.** | साम्राज्यनिबन्धनम् *sāmrājya nibandhanam* | A new constitution for India (560 aphorisms) |

## VOLUME 6

### 6. सूत्रग्रन्थमाला *sūtragranthamālā* The Book of Aphorisms (Part Two)

| | | |
|---|---|---|
| **6.1-16.** | *विश्वमीमांसा *viśvamīmāṁsā* | An encyclopedic work on all aspects of the Hindu religion (1640 aphorisms) |
| **6.17.** | तत्त्वानुशासनसूत्राणि *tattvānuśāsana-sūtrāṇi* | Instructions on the principles of existence (18 aphorisms) |
| **6.18-26** | *धर्मानुशासनम् *dharmānu-śāsanam* | Instructions on Dharma (839 aphorisms) |

| | | |
|---|---|---|
| **6.27-28** | *देवतामीमांसा<br>*devatāmīmāṁsā* | On Vedic deties<br>(162 aphorisms) |
| **6.29.** | *वासिष्ठदर्शनम्<br>*vāsiṣṭhadarśanam* | Doctrine of Ganapati Muni<br>(45 aphorisms) |
| **6.30.** | *सर्वार्थदर्शनम्<br>*sarvārtha-darśanam* | On the doctrine of direct perception (77 aphorisms) |
| **6.31.** | *आदिशास्त्रार्थसूत्रम्<br>*ādiśāstrātha-sūtram* | On the first hymn of the Rigveda (70 aphorisms) |
| **6.32.** | *वासिष्ठकामसूत्राणि<br>*vāsiṣṭhakāma sūtrāṇi* | On sexual love as understood by Ganapati Muni<br>(89 aphorisms) |
| **6.33.** | *महावार्तिकम्<br>*mahāvārtikam* | On the authenticity of Vedic texts (94 aphorisms) |

## VOLUME 7

### 7. भाष्यग्रन्थमाला *bhāṣyagranthamālā*
### **The Book of Commentaries**

| | | |
|---|---|---|
| **7.1.** | *मूलग्रन्थप्रशंसा<br>*mūlagrantha-praśaṁsā* | A tribute to Rigveda |

| | | |
|---|---|---|
| **7.2.** | *नूतनभाष्यकरणा-<br>वसरकथनम्<br>*nūtanabhāṣyakaraṇā-<br>vasarakathanam* | Necessity for a fresh and new interpretation of the Rigveda |
| **7.3-5.** | *ऋग्वेदभाष्यम्<br>*ṛgvedabhāṣyam* | Introduction to a commentary on the Rigveda |
| **7.6.** | *आदिवेदमीमांसा<br>*ādivedamīmāṁsā* | On the Rigveda |
| **7.7.** | *ऋग्वेदविमर्शिनी<br>*ṛgvedavimarśinī* | Rigveda – an introduction |
| **7.8.** | ऋग्वेदमन्त्रभाष्यम्<br>*ṛgvedamantra-<br>bhāṣyam* | Explanation of some of the hymns of the 1st, 2nd and 7th mandala of Rigveda |
| **7.9.** | *विश्वमीमांसा-<br>प्रथमम् अक्षरप्रकरणम्<br>*viśvamīmāṁsā-<br>prathamamakṣara-<br>prakaraṇam* | On word-meaning relationship |
| **7.10.** | *देवताकाण्डे द्वितीयं<br>प्रकरणम्<br>*devatākāṇḍe dvitīyaṁ<br>prakaraṇam* | Second chapter on Vedic godheads |

| | | |
|---|---|---|
| **7.11.** | *ऐन्द्रसहस्रनाम-<br>भाष्यम्<br>*aindrasahasra-<br>nāmabhāṣyam* | Commentary on thousand names of Indra |
| **7.12.** | जैमिनीयसूत्रभाष्यम्<br>*jaiminīyasūtra-<br>bhāṣyam* | Commentary on the aphorisms of Jaimini |
| **7.13.** | ईशोपनिषद्भाष्यम्<br>*īśopaniṣadbhāṣyam* | Commentary on Ishopanishad |
| **7.14.** | उपदेशसारभाष्यम्<br>*upadeśasārabhāṣyam* | Commentary on Upadeshasara of Sri Ramana Maharshi |
| **7.15.** | गुरुमन्त्रभाष्यम्<br>*gurumantrabhāṣyam* | Commentary on Gurumantra |
| **7.16.** | अग्नेः चतस्रो विभूतयः<br>*agneḥ catasro<br>vibhūtayaḥ* | Four emanations of Agni |
| **7.17.** | दैवरातदर्शनम्<br>अन्वयभाष्यम्<br>*daivarāta-<br>darśanam<br>anvayabhāṣyam* | A commentary on the doctrine of Daivarata, a disciple of Sri Ganapati Muni |
| **7.18.** | *मातृतत्त्वप्रकाशिका<br>*mātṛtattva-<br>prakāśikā* | A Sanskrit rendering of two chapters of Sri Aurobindo's *The Mother* |

| | | |
|---|---|---|
| **7.19.** | *शारीरकमीमांसा टिप्पणी *śārīrakamīmāṁsā-ṭippaṇī* | A note on the *Brahmasutra-bhashya* of Adi Sankara |
| **7.20.** | *वैदिकपदानामर्थाः *vaidikapadānām arthāḥ* | Meanings of Vedic words |

## VOLUME 8

**8.** आयुर्वेदज्योतिषग्रन्थमाला
*āyurvedajyotiṣagranthamālā*
**The Book of Ayurveda and Astrology**

| | | |
|---|---|---|
| **8.1.** | चिकित्सानुशासनम् *cikitsānuśāsanam* | Instructions on medical treatment (384 aphorisms) |
| **8.2.** | प्राणतोषणम् *prāṇatoṣaṇam* | A treatise on the maintenance of a healthy life (108 verses) |
| **8.3.** | होरानिर्णयसङ्ग्रहः *horānirṇaya-saṅgrahaḥ* | A treatise on Astrology (81 verses) |
| **8.4.** | षोडशश्लोकी *ṣoḍaśaślokī* | Merits and demerits of the planetary positions (16 verses) |
| **8.5.** | त्रिभावफलचन्द्रिका *tribhāvaphala-candrikā* | A work on Keraliya Astrology dealing with Ayu – life-span, Kalatra – wife, Putra – son (89 verses) |

| | | |
|---|---|---|
| **8.6.** | गणककण्ठाभरणम् *gaṇakakaṇṭhā-bharaṇam* | On movements of the planets |

VOLUME 9

**9.** *भारतचरित्रमीमांसा *bhāratacaritramīmāṁsā*
**A Treatise on the Mahabharata**

VOLUME 10

**10.** *पूर्णा *pūrṇā*
**Purna – A Novel**

VOLUME 11

**11.** प्रकीर्णकम् *prakīrṇakam*
**Miscellaneous Writings**

| | | |
|---|---|---|
| **11.1.** | गणपतिमुनेः पत्राणि *gaṇapatimuneḥ patrāṇi* | Letters of Ganapati Muni |
| **11.2.** | नवद्वीप-काव्यकण्ठः *navadvīpa-kāvya-kaṇṭhaḥ* | Ganapati Muni recieving 'Kavyakantha' title |
| **11.3.** | प्रास्ताविकपद्यानि *prāstāvikapadyāni* | Collection of stray verses |

| | | |
|---|---|---|
| **11.4.** | सुकन्यादस्रसंवादः *sukanyādasra-saṁvādaḥ* | Dialogue between Sukanya and Ashwinideva from Mahabharata |
| **11.5.** | पाण्डवधार्तराष्ट्रसम्भवः *pāṇḍavadhārta-rāṣṭrasaṁbhavaḥ* | Extempore verses on the origin of the Pandavas and Kauravas |
| **11.6.** | *भृगुवंश इतिहासः *bhṛguvaṁśa itihāsaḥ* | History of Bhrigu lineage |
| **11.7.** | लालिभाषोपदेशः *lalibhāṣopadeśaḥ* | A proposed new language |
| **11.8.** | इतरग्रन्थाः *itaragranthāḥ* | Other texts |

## VOLUME 12

**12.** अनुक्रमणी *anukramaṇī*
**Index**



"Vasishtha Ganapati Muni (1878-1936) was a luminary of the first magnitude on the spiritual firmament of modern India. He was a versatile genius whose contribution in the many fields to which he turned his attention are yet to be fully assessed." **Sri M.P. Pandit**, ***Adoration of the Divine Mother***.

"Kavyakantha Ganapati Sastri, .... played much the same role in the life and reputation of Bhagavan Sri Ramana Maharshi as Swami Vivekananda did in that of Sri Ramakrishna Paramahamsa. Sri Vasishtha Muni was a mighty spiritual personality in his own right..... he recognized the uniqueness of Bhagavan's teaching, accepted him as his *guru* and proclaimed him as the Maharshi to the whole world. Those who want to understand the message of the Maharshi in its pristine purity have to study the Muni's redaction of the Master's teachings ..." **Sri S. Shankaranarayanan**, ***Bhavan's Journal***.

।। वासिष्ठकाव्यकण्ठगणपतिमुनेः ग्रन्थमाला ।।

Collected Works of Vasishtha Kavyakantha Ganapati Muni

| | |
|---|---|
| VOLUME 1 | स्तोत्रग्रन्थमाला *stotragranthamālā*<br>The Book of Adoration (Part One) |
| VOLUME 2 | स्तोत्रग्रन्थमाला *stotragranthamālā*<br>The Book of Adoration (Part Two) |
| VOLUME 3 | स्तोत्रग्रन्थमाला *stotragranthamālā*<br>The Book of Adoration (Part Three) |
| VOLUME 4 | तत्त्वग्रन्थमाला *tattvagranthamālā*<br>A Book on the Principles of Existence |
| VOLUME 5 | सूत्रग्रन्थमाला *sūtragranthamālā*<br>The Book of Aphorisms (Part One) |
| VOLUME 6 | सूत्रग्रन्थमाला *sūtragranthamālā*<br>The Book of Aphorisms (Part Two) |
| VOLUME 7 | भाष्यग्रन्थमाला *bhāṣyagranthamālā*<br>The Book of Commentaries |
| VOLUME 8 | आयुर्वेदज्योतिषग्रन्थमाला *āyurvedajyotiṣagranthamālā*<br>The Book of Ayurveda and Astrology |
| VOLUME 9 | भारतचरित्रमीमांसा *bhāratacaritramīmāṁsā*<br>A Treatise on the Mahabharata |
| **VOLUME 10** | पूर्णा ***purṇā***<br>**Purna - A Novel** |
| VOLUME 11 | प्रकीर्णकम् *prakīrṇakam*<br>Miscellaneous Writings |
| VOLUME 12 | अनुक्रमणी *anukramaṇī*<br>Index |